वमतिरूपम्प्रतिपत्तव्यः। श्रुतौ "तत्वमसि" इत्यादिवाक्यैः अपहतपाप्मत्वादिलक्षणं ब्रह्मशारीरस्य जीवात्मनः आत्मत्वेनोपदिश्यते "तद्धि आत्मनोरूपम्' इति सूत्रितमप्यस्मिन् ग्रन्थे ततश्च शारीरस्यापि तावद्भोक्तृत्वं वारयति ईश्वरे तु कैमुतन्यायआयाति। तदा "द्रष्टा श्रोता मन्ता बोद्धा कर्त्ता" इत्यादिश्रुतेः "पुरुषः सुखदुःखानाम्भोक्तृत्वे हेतुरुच्यते" इत्यादिस्मृतेः। योगर्त्तं खनति स निपतति इतिलोकोक्तेश्च जीवभोक्तृत्वप्रतिषेधे का गतिः एवमेवासमञ्जस्ये प्रसूयते सूक्ष्मो विचारः आत्मन्यध्यस्तबुद्धिगतसत्वरजस्तमोवृत्तिसुखदुःखमोहस्य जीवस्य मिथ्याज्ञाननिमित्तः औपचारिक एव भोगः न वास्तविकः अनात्मधर्म्मस्य भोगस्य असत्वात् आत्मनोऽसङ्गत्वात् वास्तविकभोगसम्बन्धानुपपत्तेः अपहतपापमत्वादिधर्म्मस्य ईश्वरस्य भोगस्पर्शलेशोपि न मन्तव्यः समाधौ शारीरात्मनि संसारभोगव्यतिरेकत्वदर्शनात् समरभूमौ प्रस्फुटितकपालस्य स्रवद्रक्तस्यापि पुरुषस्य प्रतिभटनिहितबुद्धेः वेदनान्तःकरणासंयोगदशयां न वेदनादवगमः स एव पुरुषः त्वम्प्रस्फुटितकपालोसि स्रवद्रक्तोसि इति केनचित्पुरुषेण प्रतिबोधितः प्रतिभटानिहितबुद्धिः बुद्धिसम्पृक्तवेदनावान् व्याकुलोभवति मूर्च्छितोवा निपतति विचार्य्यतामिदमत्र वेदना तु उभयत्र एकरूपैव परन्तु पुरुष बुद्धि वियोगसंयोगावेव वेदनावगमानवगमप्रयोजकावितश्चापि प्रसिद्धाल्लौकिकोदाहरणात् शारीरस्यात्मनः वास्तविकभोगानुपपत्तिः जीवात्मा पुरुषोऽपि निवृत्तबुद्धिवृत्त्यवस्थातः स्वस्वरूपस्थः परमात्मरूप एवेति वेदितव्यम् नहि बालैस्तलनीलिमादिभिर्विकल्पिते नभसि वास्तविकम् तलनीलिमादिवैशिष्ट्यं भवति तथा नाज्ञाननिमित्तो बुद्धिगतोभोगोजीवस्य वास्तविको भवितुमर्हति नित्यालुप्तज्ञानस्य नित्यमुक्तस्य ब्रह्मणः दूरत एव निरस्तइति वेदियव्यम्। पूर्वोक्तसौत्रसंसृतिशब्दसंसूचितलोकान्तरगामित्वयोन्यन्तरगामित्वे वैराग्यदार्ढ्याय विव्रियेते लिङ्गशरीरोपहितः प्राणसचिवः समनस्कोऽविद्याकर्म पूर्वप्रज्ञापरिग्रहः प्राक्शरीरं परितज्य शरीरान्तरं गच्छति इत्यभ्युपगम्यते 'अथैनमेते प्राणाअभिसमायन्ति" इत्युपक्रम्य "अन्यन्नवतरं कल्याणतरं रूपम्" इत्यन्तेन श्रवणात् "वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि। तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही" इतिस्मरणाच्च तत्रलिङ्गशरीरे "बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया। शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते"

इत्याद्युक्तेः पञ्चप्राणमनोबुद्धिदशेन्द्रियोपादानवत् भूतोपादानस्यानुपलब्धेरपि "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" इति ब्रह्मसूत्रात् "वेत्थं यथा पञ्चम्यामाहुतावापः पुरुषवचसोभवन्ति" इति श्रौतप्रश्नेन द्युपर्य्यन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा "पञ्चम्यामाहुतावापः पुरुषवचसोभवन्ति" इति श्रौतनिरूपणेन च देहबीजानां भूतसूक्ष्माणामपि लिङ्गदेहे सत्त्वं वेदितव्यम् देहाद्देहान्तरप्राप्तौ जलौकासादृश्येन कर्मप्राप्यदेहविषयभावनादीर्घीभावमात्रं वेदितव्यम् "अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति आकाशाच्चन्द्रमसमेव सोमोराजा" इत्यादिश्रुतिः इष्टादिकारिणां पितृयानेन पथा प्रवृत्तिमार्गेणेति यावत् चन्द्रप्राप्तिं कथयति अनेन प्रवृत्तिमार्गगामिनां स्वर्गप्राप्तिरपि कथ्यते कर्मणा देवत्वावगमात् "अथ ये शतं पितॄणां जितलोकानामानन्दा स एकः कर्मदेवानामानन्दो ये कर्म्मणादेवत्वमभिसम्पद्यन्ते" इतिश्रुतेः इष्टादिकारिणां कर्म्मदेवानां देवे संवसतां भोगप्राप्तिदर्शनात् ततश्च पुनरावृत्तिरपि श्रूयते "स सोमलोके भूतिमनुभूय पुनरावर्त्तते" इतिश्रुतेः "क्षीणे पुण्ये मर्त्यलोके विशन्ति" इतिस्मृतेश्च येन कर्म्मनिचयेन चन्द्रमसमारोहन्ति फलोपभोगाय तस्मिन्नुपभुक्ते क्षीणे सति यच्छरीरं चन्द्रमसि उपभोगाय आरब्धं तदुपभोगक्षयनिमित्तशोकानलसम्पर्कात् प्रविलीयते सूर्य्यांशुसंयोगात् तुषार इव अग्निसंयोगात् घृतकाठिन्यमिव ततः "य इह रमणीयचरणाः अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते ब्राह्मणयोनिं वा वश्ययोनिं वा अथ तद्य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्यन्ते श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा" इत्यादिश्रुतेः सानुशया अवरोहन्ति फले कर्मजाते उपभुक्ते अवशिष्टमैहिकफलं कर्मान्तरजातम् अनुशयस्तद्वन्तोऽवरोहन्तीति यावत् अनिष्टादिकारिणः तमोबहुलाः पुण्यविहीनाः पापिनः यमालयमवगाह्य स्वदुरितानुकूलां यामीं यातनामनुभूय पुनरपि इमं लोकमवरोहन्ति ते कपूयचरणा एवावरोहन्ति तेषां नहि रमणीयचरणत्वं भवति चरणशब्देन "चरणं चारित्रमाचारः शीलम्" इत्युक्तेः शीलमपि सूचितम् भवति तथाप्यत्र सुशीलदुःशीलसाध्यसुकृतदुष्कृतपरावेव रमणीयचरणकपूयचरणशब्दावितिवेद्यम्। स्वर्गच्युतानां रमणीयचरणत्वप्राधान्यम् इतरेषामितरप्राधान्यं वेद्यम्। इष्टादिकारिणां सुकृतबाहुल्यात्

दुष्कृतस्य च कादाचित्कत्वात्। संसृतिपतितानां प्रवृत्तिमार्गेण लोकान्तरगामित्वं लोकान्तरावरोहेण योन्यन्तरगामित्वञ्च पुनर्लोकान्तरगामित्वं योन्यन्तरगामित्वञ्च पौनः पुन्येन भवति। एवं चक्रशते कर्मिणां प्रवृत्तिमार्गगामिनां परिभ्रमणं भवति। एतावता ग्रन्थसन्दर्भेण प्रवृत्तिमार्गे दुःखबाहुल्यं सूचितम् वैराग्यदार्ढ्याय इतिवेद्यम्। प्रसङ्गप्राप्तनिवृत्तिमार्गः प्रतिपाद्यते "तेऽर्चिषमभिसम्भवन्ति" "विद्यया देवलोकः" इत्यादिश्रुतेः "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदोजनाः" इत्यादिस्मृतेश्च प्रवृत्तिमार्गे पुनरावृत्तिः प्रतिपाद्यते। निवृत्तिमार्गे तु अनावृत्तिः। निवृत्तिमार्गोदेवयानपदवाच्योमोक्षमार्ग इतिवेद्यम्। अत्रशङ्कनीयम् यदि विद्यया उपासनयैव मोक्षप्राप्तिः तदालं मोक्षसाधनेन ज्ञानकाण्डेनेत्युच्यते अत्र तु विद्यावतां भगवदुपासकानां सम्यक्दर्शनविहीनानां देवलोकप्राप्त्या क्रममुक्तिरितिवेद्यम् "नहि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिर्वा क्वचिद्भवति" "न तस्य प्राणा उत्क्रामन्ति" "विमुक्तश्च विमुच्यते" इत्यादिश्रुतेः केचित्तु राजसा विद्याकर्मविहीना नरकप्रदपापरहिताश्च "अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति" इतिश्रुतेः "मध्ये तिष्ठन्ति राजसाः"। इत्यादिस्मृतेश्च योनेर्योन्यन्तरं गच्छन्ति 'जायस्व म्रियस्वेत्येतत्तृतीयस्थानं न तेनासौ लोकः संपूर्य्यते" इतिश्रुत्युक्ततृतीयस्थानिनां निरुक्तमध्यस्थानाम् निवृत्तिप्रवृत्तिमार्गयोः विद्याकर्मसाध्ययोः कतरेणापि गमनाश्रवणात् अस्मिन् प्रवृत्तिनिवृत्तिभिन्ने योनितोयोन्यन्तरगमनरूपे देहलाभोपपत्तये कथं द्युपर्य्यन्तपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपपञ्चाहुतिसम्भवः कथञ्च "अथैनमेवाध्वानं पुनर्निवर्त्तन्ते यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमोभवति धूमोभूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघोभवति मेघोभूत्वा वर्षति त इह ब्रीहियवा ओषधिवनस्पतयस्तिलमाषा इतिजायन्ते अतोवै खलु दुर्निःप्रपतरं योयोह्यन्नमत्ति योरेतः सिञ्चति" इत्याद्युक्तश्रुतिक्रमासम्भवः अत्रोच्यते न तृतीयस्थाने देहलाभाय पञ्चाहुतिसंख्यानियमः आरणीयश्रुतौ जायस्व म्रियस्व इतिसंख्यानियममन्तरैव जन्ममरणप्रतिपादनात् "पञ्चम्यामाहुतावापः" इतिश्रुतौ मनुष्यशरीरनिबन्धनमेव संख्याकथनं पुरुषशब्दस्य मनुष्यशब्दपर्य्यायत्वात् न कीटपतङ्गादिशरीरनिबन्धनः पञ्चाहुतिसंख्यानियमः पुरुषवचस्त्वं प्रतिपादयति नचात्रपञ्च-

म्याहुतिषु पुरुषवचस्त्वं प्रतिषेधति यथैकादशीव्रतमेकादश्यामुपोषण- म्प्रतिपादयति न चतुर्दश्यामनुपोषणम् येषामारोहणावरोहणसम्भवः तेषां पञ्चाहुतिसंख्यानियमः। अन्येषान्तु पञ्चाहुतिसंख्यानियमम- न्तरैव भूतान्तरोपसृष्टो भूतले उद्भवोभवति। एतेनैव चन्द्रमण्डलगम- नव्यतिरेकात् आकाशादिसम्पत्तिव्रीह्यादिसम्पत्ती निरस्ते इतिवेदि- तव्यम्। क्रमजातशुक्रभावोऽपि निरस्त इतिवेद्यम्। दृश्यते द्रोणादीनां योषिद्विषयकाहुत्यभावः धृष्टद्युम्नादीनां योषित्पुरुषविषयकाहु- तिद्वयाभावः सीतायाश्चायोनिजत्वम् जरायुजाण्डजस्वेदजोद्भि- ज्जरूपचतुर्विधभूतग्रामे स्वेदजोद्भिज्जयोः रेतःसिग्भावमन्तरैवउत्प- त्तिदर्शनं तस्माद्योनितोयोन्यन्तरगमनं पञ्चाहुत्यादिगगनसम्पत्त्या- दिनियममन्तरैव अनिष्टादिकारिणां तृतीयस्थानिनां भवतीतिसिद्धम् एवमुक्तप्रकारेण संसारिणां लोकान्तरयोन्यन्तरगमनजनितदुःखबा- हुल्यं दर्शितम् तेन च मुमुक्षूणां वैराग्यं दृढीकृतमितिवेदितव्यम्। यद्यपीहोपदेशशब्दः श्रद्धासूचकः प्रथमसूत्रस्थः प्रमाणापेक्षामत्र ग्रन्थे निवारयति तथैवोपदेशशब्दव्याख्याने अस्माभिः प्रतिपादितम् तथापि श्रद्दधानानामधिकारिणां मुमुक्षूणामत्र पुनः पुनः श्रद्धाविवृद्धये भक्तिसमृद्धये च प्रतिवादिप्रतिष्ठापितसन्देहापनोदनाय संदिग्धस्थले प्रमाणप्रदर्शनपूर्वकमेव विवृत्तिः कृतेतिवेदितव्यम्। सदयसूत्रकृदाशय- राशयोऽपि प्रकाशिता इतिवेदितव्यम्॥ १ ॥ १ ॥ २ ॥

अमृतं संसृतिनिवृत्तिशब्दवाच्यं मोक्ष इत्युक्तम् का पुनः संसृ- तिरित्यग्रिमसूत्रे प्रतिपाद्यते।

संसृतिः स्वरूपविस्मृतिः ॥१॥१॥३॥

संसृतिः श्रीमता सूत्रकारेण स्वरूपतटस्थलक्षणाभ्यां यौगपद्येन लक्ष्यते का सा संसृति र्नामेति स्वरूपविस्मृतिः स्वरूपस्य विस्मृतिः षष्ठीतत्पुरुषः इदं स्वरूपलक्षणमिति वेद्यम्। स्वरूपस्य विस्मृतिर्यत इतिबहुव्रीहिः इदन्तु तटस्थलक्षणं वेद्यम्। "भावः सत्ता स्वभावाभि- प्रायः" इतिकोषात् भावशब्दःस्वभावपर्य्यायः स्वभावशब्दःस्वरूप- पर्य्यायः तस्मात्स्वरूपविस्मृतिरित्यत्र भावविस्मृतिरित्येवंरूपे सूत्र- शरीरे लाघवलाभमनादृत्य भावशब्दस्य नानार्थशक्तिकत्वात् बोद्धाऽ- नभिप्रेतार्थं न प्रतीयादिति स्वरूपशब्दं प्रयुक्तवानिति वेद्यम्। स्वरूपं स्वस्य आत्मनोरूपं रूपयतीति रूपं तत्र निराकारस्यात्मनः रूपणायोगात् अत्रस्वरूपशब्देन स्वभाव इतिवेद्यम् "स्वरूपञ्च

स्वभावश्च निसर्गश्च" इतिकोषात् स्वरूपं स्वभाव इतियावत् तस्य विस्मृतिः विस्मरणम् यद्वा । "भावोविद्वानथात्मनः" इतिकोषात् स्वभावशब्देन स्वस्य विद्वान् आत्मज्ञः स्वरूपपरिचयी "स्वरूपपरिचयोयोगः" इत्यत्र सूत्रात् "तद्धि आत्मनोरूपम्" इत्यत्रसूचितत्वात् समवरुद्धसमस्तभगब्रह्माभिन्नप्रत्यगात्मा तत्सम्बधिनी आनन्दादिस्वभावाऽऽवरणनिमित्तीभूता विस्मृतिरिति वेद्यम् । यद्वा स्वरूपशब्दः निरुक्तकोषवलात् अभिप्रायपर्य्यायत्वे पर्य्यवसितः "बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः। मात्रार्थञ्च भावार्थञ्च आत्मनेकल्पनाय च" इतिस्मृतेरयमाशयः सानुशयान् जीवान् तेषां धर्मार्थकामरूपत्रिवर्गप्राप्तिपूर्वकचतुर्थवर्गमुक्तिसिद्ध्यभिप्रायेण भगवानीश्वरोऽसृजदिति स्वोत्पत्तौ स्वस्मै स्रष्टुः मुक्तिनिष्पत्त्यनुकूलाभिप्रायः तस्य विस्मृतिरिति । यद्वा "तस्मादहम्विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदात्मनैव । भूयोयथा व्यसनमेतदनेकरन्ध्रम् मा मे भविष्यदुपसादितविष्णुपादः" अस्याःस्मृतेरयमाशयः रौरवोत्कटयातनाभूमिगर्भस्थजन्तुः पुनर्गर्भवासनिवृत्त्यभिप्रायेण व्यवतिष्ठति तदभिप्रायेण निर्जिगमिषति "रोहयति गते ज्ञाने विपरीताङ्गतिङ्गतः" इतिस्मृतिः गर्भस्थजन्तोः गर्भान्निर्गमनानन्तरम् तदभिप्रायविस्मृतिं द्योतयति तदत्र स्वरूपविस्मृतेः गर्भस्थजन्त्वभिप्रायविस्मृतिरित्यर्थोवेदितव्यः । ग्रन्थविस्तारभयमवशिष्टपक्षान्तरव्याख्यानम् वारयति इति वेद्यम् । अत्र ग्रन्थे तद्धीत्यादिना स्वरूपं सर्व्वशक्तिसमन्वितम् ब्रह्म प्रतिपाद्यते बृहतेर्धातोरर्थानुगमात् सर्व्वात्मनः ब्रह्मणः जीवात्मनः स्वरूपस्य सर्व्वत्राहम्प्रत्ययेनोपलभ्यमानस्य सिद्धैवास्तित्वसिद्धिः सर्व्वोहि अहमस्मीति मन्यते भवत्यप्यनुपपत्तिरात्माभावस्य असमक्षकत्वात् । आत्माभावसाक्ष्यमपि आत्मभावेनैवभाव्यम् रूपस्य चक्षुः प्रकाश्यत्ववत् सर्व्वपदार्थस्य तस्य दृश्यत्वात् । भवति चात्र शङ्कोत्थानम् सर्व्वप्राणिभिरहमित्युपलभ्यमानस्य विस्मृतिर्न सम्भवति इतिचेत् तत्रोच्यते सम्भवस्तस्याः ब्रह्मरूपात्मनोविशेषं प्रति विप्रतिपत्तेः चेतनभावसम्पन्नशरीरमात्रमात्मेति वेदबाह्यलौकायतिकाः प्रतिपद्यन्ते केचिद्वेदबाह्या इन्द्रियाण्येव चेतनान्यात्मा इतिप्रतिपन्नाः । मन इत्यन्ये वेदबाह्याः । इन्द्रियाणि मन इतितदेकदेशिनः । प्राण इत्यपरे । विज्ञानमात्रं क्षणिकमित्यन्ये । विज्ञानं स्थिरमित्येके । शून्यमित्यपरे । एता नास्तिकानां विप्रतिपत्तयः । अस्ति देहाद्यतिरिक्तः संसारी कर्त्ता भोक्ता विभु-

रिति तार्किकः। भोक्तव केवलं न कर्त्ता इतिसाङ्ख्याः। एक एव चिज्जड़रूप आत्मा इत्यपरे कर्म्मठाः। अस्ति देहाद्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिमान् इतियोगिनः। आत्मा स भोक्तुरित्यपरे वेदान्तिनः इत्यास्तिकानां विप्रतिपत्तयः। एवमनेके विप्रतिपन्नाः हेतुवादतदाभासमभिसम्पन्नाः सन्तु। ते विस्मृतात्मयाथात्म्येन यत्किञ्चिदभिमन्यमानाः परमार्थात् प्रतिहन्येरन् अनर्थञ्च प्रतिपद्येरन्। अत्रात्मा स भोक्तुरिति निरवद्यप्रतिपत्तिः सिद्धान्तरूपेति वेद्यम्। अन्यास्तु सर्वा एवविप्रतिपत्तयः नास्तिकानामास्तिकानाञ्च यथाक्रमं निराक्रियन्ते देहे स्थूलोऽहं गौरोऽहमित्याद्यभिमन्यमानः शुक्रशोणितसम्भूतमन्नमयं विकारिणं चर्मास्थिस्नायुमांसमेदोमज्जाशोणितश्लेष्ममलमूत्रादिभाण्डारमाधिव्याधिबहुलं पञ्चत्वमितेऽस्मिन् विट्कीटभस्मावशेषं देहं स्वमात्मानं प्रतिपादयन् किन्नलज्जसे पश्य कश्चित्सुखी कश्चिद्दुःखी दृश्यते तत्र देहरूपस्य तवात्मनः पूर्वदेहजकर्म्माभावे किन्निमित्तं तत्सुखं दुःखञ्च वाच्यम् पूर्वदेहिकाभ्यासाभावे च स्तन्यपानादावाद्यप्रवृत्तिः किंनिबन्धना विद्यमानशरीरस्यात्मरूपस्य प्राक्तनकर्म्माभावे शरीरमपि किन्निबन्धनं चैतन्यविशिष्टदेहात्मत्वाभ्युपगमे कथं मृतदेहस्याचैतन्यम् दृश्यते तदापिदेहात्मसत्त्वाविशेषात् स्वभावनिमित्तत्वे सुखदुःखादिवैचित्र्यानुपपत्तिः। स्वभाववैशिष्ट्ये हेत्वनुपपत्तिः दृश्यते च तैलबीजादिनिमित्तसाम्ये नैमित्तिकदीपाङ्कुरादिसाम्यम् सुखदुःखवैचित्र्ये निमित्तं कर्म मन्यसे चेत् तदा शरीरस्थितिकालिकभोगनिमित्ततादृशकर्मासम्भवात्तदसम्भवः एवं स्वादृष्टरूपप्राक्तनकर्म्मकर्त्ता देहाद्यतिरिक्तोनित्य आत्मा भवितुमर्हति इतिसिद्धम्। भवति वेदबाह्यस्यलौकायतिकस्य वेदप्रमाणमन्तरेव युक्तिप्रदर्शनपूर्वकंखण्डनं ततस्तथैवतत्प्रतिपादितमितिवेद्यम्। काणोऽहं बधिरोऽहमित्यभिमन्यमानः चेतनानीन्द्रियाण्येवात्मा इति प्रतिपन्नः वेदबाह्यस्त्वं प्रष्टव्यः प्रतिकरणात्मत्वस्वीकारे स्वाम्यनेकत्वसिद्धौ तव देहोबहुस्वामिभिरिन्द्रियैरेककालएवैकएवश्रवणदर्शनादितत्कर्मसु नियुक्तः आकृष्टः भिन्नदेशेषु नोन्मथ्यते कस्मात् भवति च करणसमुदायात्मवादेऽपि अन्धबधिरमूकादीनां दुर्वारमरणप्रसङ्गः मणिसमुदायघटकमणिमालैकमणित्रुटौ, मणिमालात्रुटिवत् करणसमुदायात्मवादे कार्य्यनिष्पत्त्यनुपपत्तिः लोकसिद्धप्रत्तिकरणवृत्तिश्रवणाद्यनुपपत्तेः वागिन्द्रियेण दर्शनश्रवणाद्यशक्तेन

दृष्टश्रुतादिकथनं न घटते अन्यदृष्टश्रुताद्यर्थानामन्योक्त्यनुपपत्तेः भवति चेन्द्रियात्मवादे इन्द्रियवृत्तिव्यतिरेकिस्वप्नसुषुप्तिदशानुपपत्तिः तदा निवृत्तिककरणानुभवानुपपत्तेः इन्द्रियलयेनैवात्मलयसिद्धेः कथं भवानिन्द्रियात्मवादी सुप्तः सुषुप्तो वा पुनरुत्तिष्ठति न मृतक इव दग्धोवा भूम्यन्तरुपरुद्धोवा भवति आत्मलयस्यैव मरणप्रसिद्धेः अतो न युक्तं तत्र कपोलकल्पितकथनमिति सिद्धम् । एवमिन्द्रियाणि मन आत्मेतिवादोऽपि निरस्तोवेदितव्यः तत्रापि सुषुप्तिदशानुपपत्त्यादिदोषसाम्यात्। प्राणात्मवादी बुभुक्षुरहं पिपासुरहमित्यभिमन्यमानः वेदबाह्यस्त्वं प्रष्टव्यः प्राणस्ते भक्षणपानाधीनः कथमात्मा परतन्त्रः पराभूतः परमात्मा स्वीकर्त्तुः न ते प्राणोभवितुमर्हत्यात्मात्वमचलः प्राणे चलत्यप्यहमचल इति किन्न प्रत्येषि। किम्वा प्राणधारणत्वेन प्राणादपर आत्मा जीवो न लक्ष्यते जीवनस्य प्राणधारणत्वव्युत्पत्त्याव्याकरणात् 'जीव प्राणधारणे' इतिधातोः किं वा समाधिस्थं निरुद्धप्राणं जीवन्तं चेतनं न पश्यसि अतस्त्वं केनापि वञ्चितः स्वयंदैवेन कथमन्यान् हन्तुं प्रवर्त्तसे । जन्मनिदानमन्नमयं शुद्धमशुद्धं चञ्चलश्रवणादिसाधनमन्तः करणं बन्धमुक्तिप्रदम् मन आत्मेत्यभिमन्यमानो वेदबाह्यस्त्वंप्रष्टव्यः सुषुप्तिलीनमनाः कथं सुखमनुभवसि कथं वा प्रबुद्धः सुषुप्तिसुखं स्मरसि सुषुप्तौ मनसस्तवात्मनोलयाभ्युपगमात् तदनुपपत्तेः सुखानुभवितुरभावात् स्मृत्यनुपपत्तेरिति यावत् । जन्मनिमित्तीभूतमन्नविकारि शुद्ध्यशुद्धिपरिणामि चञ्चलं कर्त्तृक्रियासाधनसामग्रीकरणरूपबन्धमुक्तिप्रदं मनोनात्मा भवितुमर्हति तस्मादनादर्त्तव्यवचन भवान् मिथ्याप्रलापीति सिद्धम् । क्षणिकविज्ञानमात्मेत्यभिमन्यमानो वेदबाह्यः सौगतस्त्वम्प्रष्टव्यः सर्ववस्तुक्षणिकत्वाभ्युपगमे तवोपलब्धुरनुस्मरणं सम्भवति। भवति त्वुपलब्धुस्ते क्षणिकत्वानुपपत्तिः।तथाहि भवाननुपलब्ध्वा कथमुपलब्धमनुभूतं विषयमनुस्मरति अनुभवमनूत्पद्यमानं स्मरणमनुस्मृतिः सा चोपलब्ध्येककर्त्तृका सती सम्भवति पुरुषान्तरोपलब्धविषये पुरुषान्तरस्मृत्यदर्शनात् कथमहमद्राक्षमिदं पश्यामीति पूर्वापरदर्शिनि असत्येकस्मिन्प्रत्ययः सम्भवेत् योऽहमिदं पूर्वमद्राक्षं स एवाहमद्य तत्स्मरामीति प्रत्यभिज्ञा सर्वजनप्रसिद्धैव वर्त्तते । यदि दर्शनस्मरणयोः कर्त्ता भिन्नः स्यात् तदाहं स्मराम्यन्योऽद्राक्षीदिति प्रतीयात् न त्वेवं कश्चित्प्रत्येति । तत्रैवं सति एकस्यैवक्षणिकविज्ञानवादिनस्तव दर्शनस्मरणक्षणद्वितयसम्बन्धिनः क्षणिकत्वाभ्युपगमहा-

निरप्रतिहतैवापततीति वेद्यम् विज्ञानस्य मनोवस्थान्तररूपबुद्ध्यपर-पर्य्यायस्य आत्मत्वनिराकरणाय मानसात्मत्ववादे मूर्छाकालिकस्त-ब्धत्वादिदोषः स्थिरविज्ञानात्मवादनिराकरणावसरे वक्ष्यन्ते । स्थिर-विज्ञानमात्मेत्यभिमन्यमानः प्रष्टव्यो वेदबाह्योबौद्धोभवान् कर्त्ता कि-मन्तरा करणभूतमशनक्रियासाधनमश्नाति नोचेत् विज्ञानपर्य्यायबु-द्धेरेवान्तःकरणत्वप्रसिद्धेः तस्या एवात्मत्वस्वीकारे सा बुद्धिः कर्त्रीभूता बोधनक्रियासाधनान्तःकरणमन्तरा बोधनक्रियां सम्पादयितुं किं शक्नु-यात् कर्त्तृकरणद्वितयस्य लोके कार्य्यनिःपादकत्वदर्शनात् एकस्यैव विज्ञानस्य तवाभिमतस्य बुद्ध्यात्मकस्य कर्त्तृकरणद्वितयत्वानुपपत्तेः कार्य्यनिष्पत्त्यनुपपत्तिः । आत्मनः बुद्धिनिमित्तकबन्धनप्रसिद्धेः । स्व-स्याभिमतिः स्वबन्धनेन सम्भवति । एकस्यैव बन्धनक्रियायाः कर्त्तृत्वं कर्म्मत्वञ्चासङ्गतं कर्त्तृकर्म्मणोः द्वितयनिष्ठत्वप्रसिद्धेः । न दृश्यते लोके भक्तं भक्तमश्नातीति व्यवहारः । ननु देवदत्त आत्मानं ताडयतीत्यत्र देवदत्तशब्देन पुरुषोवेदितव्यः आत्मशब्देन देहः आत्मशब्दस्यदेहादौ रूढत्वात् भवति च प्रसिद्धं तस्याः सारथ्यम् शरीरस्थे रथिनो जीव-स्य मानसात्मत्वप्रतिपत्तिनिवृत्त्यनुकूलजन्ममरणसाधनत्वादिदोषोऽ-पि बौद्धमतखण्डनायास्माकं भूषणाय वेदितव्यः । शून्यमात्मेति प्रति-पन्नो नास्तिकः सौगतः प्रष्टव्योभवान् क्वापि दृश्यते शून्यादभावरूपा-द्भावोत्पत्तिर्जगति नानुपमृद्यप्रादुर्भावादित्याशयवता भवता विनष्टा-द्बीजादङ्कुर उत्पद्यते इतिचेदुच्यते तत्रोच्यते न बीजस्य स्वरूपोपम-र्दोवाच्यः न बीजस्योपमृद्यमाना पूर्वावस्था उत्तरावस्थायाः कारण-मभ्युपगम्या अनुमृद्यमानानामेवानुगानां बीजावयवानामङ्कुरकार-णत्वमभ्युपगम्यम् । वस्तुतोबीजोपमर्दे सति बीजाभावस्य शशविषा-णादिरूपाभावस्य च सामान्यात् भवतु भवन्मते शशविषाणाच्छशवि-षाणोत्पत्तिः न च सा दृश्यते आम्रबीजपनसबीजयोरुपमृद्यमानयोः भवन्मते अभावरूपयोः परस्परं निर्विशेषयोः कथं न आम्रबीजस्य पनसांकुरकारणत्वं पनसबीजस्य चाम्राङ्कुरकारणत्वम् अभावस्य च शून्यरूपस्य सर्वत्र सर्वदा सुलभत्वात् सर्वाणि कार्य्याणि सर्वदैवकार-णरूपाभावसत्त्वात् निष्पन्नानि भवन्तु । भवतु च स्वस्वकार्यनिष्प-त्तिः कृषिकर्म्मण्यकृतयत्नेऽपि कृषीवले कर्षणबीजवपनाद्यभावकारण-स्य सुलभत्वात् अनीहमानस्यैवोदासीनस्य धर्मार्थकाममोक्षाः सम्पद्यन्ताम् तत्तत्साधनाभावकारणस्य सुलभत्वात् वैयर्थ्यञ्च

तत्तत्प्रतिपादकानां शास्त्राणां कथं न वाच्यम्। भवतु च तृप्तिर्भवतः सुगतस्य विगतान्नस्यापि बुभुक्षितस्य अन्नाभावस्यापि बुभुक्षापनोदनत्वात् नचैतानि दृश्यन्ते तस्मात् भ्रान्तः प्रमत्तः सुगत इतिसिद्धम्। देहाद्यतिरिक्तः संसारी कर्त्ता भोक्ता विभुरात्मेत्यभिमन्यमानस्तार्किकः प्रष्टव्यो भवति आत्मनोवैभवं सर्वगतं चेत् तर्हि सर्वदेहेषु सर्वात्मत्वसिद्धौ भोगाव्यवस्था प्रसज्येत शरीरप्रयत्नेन्द्रियकर्म्मणामिदमत्रेदमत्रेति हेत्वसत्त्वेन सर्वात्मसामान्यात् एष भोग अस्यैवेति अनियमात् सर्वे भोगाः सर्वेषां स्युः येन मनसा यस्यात्मनः सम्बन्धः तेन मनसा तस्यैवभोग इति तर्कैत चेत् ततः स्थितिसिद्धिरिति चेन्न मनसोऽपि मूर्त्तत्वात् सर्वात्मसम्बन्धसम्भवात् देहोपाधिनिमित्तापि न सम्भवति सिद्धिर्व्यवस्थायाः आत्मनानात्वप्रतिज्ञावैयर्थ्यात् एकात्मत्वेऽपि इत्थं देहोपाधिनानात्वस्वीकारेण भोगव्यवस्थासिद्धावलम् तन्निमित्तनानात्वस्वीकारेणेतिभावः यदि तार्किकाभिमतोविशेषः स्यादात्मभेदकः एकविशेषस्य सर्वभेदकत्वासम्भवः सम्भवतर्कै तु वियत्यपिभेदापत्तिः विशेषाणां बहुत्वे तु विशेषाश्रयाणामपि बहुत्वसिद्धौ पूर्वतएव भेदसिद्धेरलम् विशेषपदार्थस्वीकारेणेति वेदितव्यम्। किञ्च आत्मना निरवयवेन मनसः सम्बन्धो गुणोत्पत्तये तार्किकाभिमतो न सम्भवति निरवयवसंयोगायोगात् तार्किकाभिमतस्य इच्छाप्रयत्नादिगुणवत आत्मनः गुणनिमित्तयोगसिद्धौ आत्मनः कर्त्तृत्वमपि न सम्भवति बुद्ध्यादिगुणसत्त्वे आत्मनः जडत्वाद्यपि सम्भवति एवं तार्किकसमयः सामय एवेति वेदितव्यम्। भोक्तैवकेवलम् न कर्त्ता आत्मेतिप्रतिपन्नः कपिलः प्रष्टव्योभवति दृश्यते क्वापि जगति कस्यचिदकर्त्तुर्भोगोपपत्तिः वा कश्चिद्रसनाचालनमन्तरा मधुमाधुर्य्यरसास्वादकोभवति अपिचाकृताभ्यागमदोषप्रसक्तिरकर्त्तुर्भोगे कपोलकल्पनाकलङ्ककपिलेन प्रकृतिः प्रधाननाम्नी पुरुषभोगसम्पादयित्री सम्भ्युपगम्यते तत्रोच्यते कीदृशो भोगः पुरुषस्य कूटस्थस्य अनाधेयसुखदुःखरूपातिशयस्य कथं वा प्रकृतेरचेतनायाः प्रवृत्तिर्युज्यते पुरुषार्थाचेतनोऽहं चिकीर्षन् करोमीतिकृतिचैतन्ययोः सामानाधिकरण्यं घटते लोकानुभवसिद्धत्वात् न युक्ता जडस्य प्रधानस्य प्रवृत्तिकृतिकल्पनेतिसिद्धम् पुरुषसान्निध्यलब्धचैतन्यं प्रवर्त्तते। अयस्कान्तसन्निधानलब्धचैतन्यलोहवदितिचेन्न सन्निधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसक्तेरात्मनोनिर्मोक्षप्रसङ्गात् अयस्कान्तस्यानित्यसन्निधेः

परिमार्जनाद्यपेक्षस्य आत्मनः नित्यसन्निधेः निरपेक्षस्य च दृष्टान्त-दार्ष्टान्तिकत्वानुपपत्तिः उभयोरसादृश्यादितिवेद्यम्। अयस्कान्तायः-सम्बन्धस्तु सम्भवति कस्यचिदन्यसम्बन्धयितुर्भावात्।अत्र तु प्रधा-नमचेतनम्, आत्मा उदासीनः, अकर्त्ता न तयोरन्यः सम्बन्धयिता त-स्मादनुपपन्नः सम्बन्धः उपपन्नमात्मप्रधानयोरसान्निध्यम् ततश्च प्रकृतिप्रवृत्तिरनुपपन्नेतिवेदितव्यम्। प्रसङ्गागतप्रकृतिकर्त्तृकमोक्षोऽपि कपिलकल्पितः पुरुषस्य न सम्भवति। कपिलाभिमतः पुरुषोऽगुणोऽप-रिणामी च। सवासनक्लेशकर्माशयानां बन्धनाह्वयानां तत्रापरिणामि-न्यसंभवात् कपिलेनअध्यासानङ्गीकाराच्च मुचेर्बन्धनविश्लेषार्थत्वात् बन्धनायोगिपुरुषे नप्रकृतिकृतमोक्ष उपपद्यते इतिवेदितव्यम्। ततश्च "पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इति प्रतिज्ञापि का-पिलानां व्यर्थैवेतिवेद्यम्।चिज्जड आत्मेत्यभिमन्यमानोभट्टोभवति प्र-ष्टव्यः। आत्मा एकः सन् चिज्जडात्मा विरुद्धोभयरूपो न स्यात् जडश्च चितोविषयइतिस्वस्यैवविषयत्वं विषयित्वञ्च न सम्भवति अंशयो-रंशिनाऽभेदेऽपि परस्परं भिन्नयोर्विषयविषयिभावो न विरुद्धइतिचेत् चिदचिद्रूपौ अंशौ किमात्मकौ ? तयोः सम्बन्धश्चकः ? अवयवत्वं न निरूपयितुं शक्यते चिद्भावस्य चिद्भावे निरवयवे सम्बन्धासम्भवः तथांशाभ्यां चिदचिद्रूपाभ्यामन्योन निरूप्यःएकत्वेऽभिमते चिदचिद्रू-पयोरंशयोः परस्परं भेदोऽपि नोपपन्नः। चेतनस्य जडता केन कारणेन स्वीक्रियते कर्त्तृत्वाद्युपपत्त्यर्थं चेत् कर्त्तृत्वं कीदृक् ? वास्तवमवास्तवं वा? वास्तवं चेत् "न तस्य कार्य्यं करणञ्च श्रूयते"इत्यादिभिः तस्य निष्क्रियत्वश्रुतेः न तत्सम्भवति।अवास्तवं चेत् न तेन कार्य्यनिष्पत्तिः सम्भवति। "पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिश्रुतेः तस्य कर्ण-धारणनिषेधात् कर्त्तृत्वाय तस्य करणधारणं न सम्भवति। ततश्च सृष्ट्यनुपपत्तिरितिवेदितव्यम्। अचक्षुषोऽपि दर्शनं श्रूयते इतिचेत् अज-डस्यापि आत्मनः कथं न सृष्ट्यादिकर्त्तृत्वमुपपद्येत तस्मात् जड़त्वस्वी कारात् जडएव भट्ट इति वेदितव्यम्। अस्ति देहाद्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिमानितिप्रतिपन्नोयोगी न सर्वथा परिशङ्कनीयः सर्वज्ञ-सर्वशक्तिमदीश्वरस्वीकारात् तथापीश्वरभिन्नायाः प्रकृतेः कृतजगत्क-र्त्तृत्वकल्पनया ईश्वरस्य प्रधानपुरुषाधिष्ठातृत्वकल्पनया च ईश्वर-स्य केवलं निमित्तकारणत्वमात्रस्वीकाराच्च भवत्ययमप्याक्षेपपात्रम् ईश्वरस्य प्रधानपुरुषाधिष्ठातृत्वेन न युक्तं जगत्कारणत्वम् उत्तमम-

ध्यमाधमभावेन सुखदुःखादिवैचित्र्यवज्जगद्रचयितूरागद्वेषादिवैषम्यप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत उक्तप्रसंगपरिहाराय ईश्वरस्यकर्मापेक्षत्वकल्पनया प्रवर्त्यप्रवर्त्तकयोःकर्मेश्वरयोरन्योन्याश्रयदोषः प्रसज्येत जगदनादित्वमपि न शक्तं प्रसक्तिहानाय जडत्वात् कर्म्मातीतमपि नेश्वरप्रेरकं युक्तं वर्त्तमानकर्मफलप्रदानाय। न च कर्म्मणः प्रेरणानुकूलमीश्वरप्रेरकत्वमितिवाच्यम् मानहीनाया निर्मूलाया अनवस्थायाः प्रसङ्गात्। अस्माकं तु "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यउन्निनीषते" इत्यादिनिरवद्या श्रुतिर्मानम्। अपिच अघटितघटनापटीयसीमायास्वीकारेण न किञ्चिदपिदुर्घटमस्माकमितिवेद्यम्। प्रधानपुरुषेश्वराणां निरवयवत्वात्। आश्रयाश्रयित्वभावानिरूपणात् सर्वगतत्वाच्च अधिष्ठेयाधिष्ठातृत्वभावोऽपि न सम्भवति। संयोगसमवायसम्बन्धद्वयस्याप्ययोगात्। अस्माकन्तु तादात्म्यसम्बन्धस्वीकारात् न किमप्यनुपपन्नमिति वेद्यम्। अस्माकं श्रुतिबलेनैव सर्वार्थप्रतिपादनम् प्रतिवादिनां सर्वं दृष्टमेव प्रतिपत्तव्यमित्ययमस्त्यतिशय इतिवेद्यम्। परस्यापि सर्वज्ञप्रणीतशास्त्रसत्त्वात् सममेवागमबलमितिचेन्न। परस्पराश्रयप्रसक्तेः आगमप्रतीतेः सर्वज्ञत्वप्रतीतिः सर्वज्ञत्वप्रतीतेरागमप्रतीतिरिति। अस्माकन्तु श्रुतिः स्वयं प्रमाणमेवालौकिकत्वात् कुम्भकारस्य रूपादिमद्धटनिर्माणे रूपादिमन्मृदादिसामग्री दृश्यते। न चेश्वरस्यास्य रूपादिमज्जगन्निर्माणे काचिद्रूपादिमती सामग्री दृश्यते। प्रधानरूपा सामग्री तु तद्विलक्षणा रूपादिहीना न युक्तेतिवेदितव्यम्। रूपादिहीनं चक्षुरादि करणवृन्दं पुरुष इव रूपादिहीनां प्रकृतिमीश्वरोऽधितिष्ठति इतिचेन्न। भोगदर्शनकरणाधिष्ठातृत्वप्रमापकम् नभोगदर्शनमीश्वरे स्वीक्रियते। स्वीकृतौ तु सुखदुःखभुजामस्माकमिव ईश्वरस्यापि संसारित्वं प्रसज्येत। एवमीश्वरस्य जगद्रचनां प्रति अप्रकृतिनिमित्तेश्वरकल्पयिता योग्यप्ययोग्योभवत्यप्रकृतिस्थः प्रकृतिस्थः साङ्ख्यसंसर्गादिति वेदितव्यम्। अपिच प्रवर्त्तनालक्षणादोषा इतिनैयायिकसमयः तेनापि तार्किकमतेन अस्मत्पक्षपातिना सूच्यते रागादिदोषप्रयुक्त एव सर्वोजनः स्वार्थे परार्थे वा प्रवर्त्तते। दृश्यते च तथा लोके प्रवृत्तिः। अपिच स्वार्थ एव जनस्य परार्थप्रवृत्तिहेतुरपि दृश्यते। ततः प्रवर्त्तमानस्येश्वरस्य स्वार्थप्रसक्त्या निरीश्वरत्वप्रसक्तिरपि आपतति। तस्माद्भवद्भिराश्रितैर्योगिभिः पक्षपातरहितैरेव भावव्यम् वैदिकानुयायिभिर्भवितव्यमित्यर्थः। न चोद्य-

मत्र दौर्जन्यम् पक्षपातादिदोषबहुलमस्मासु स्वपरयोर्मतमण्डनखण्ड-नाभ्यां यतः नात्र पक्षपातेन मतखण्डनम् किन्तु स्वरूपविप्रतिपत्ति-निरासेन तेषामद्वैतप्रियाणां मुमुक्षूणामधिकारिणाञ्च क्रमशोमोहनि-राकरणश्रद्धासम्बर्द्धनपूर्विका प्रतिपत्तिर्भूयादित्यनुकम्पयैवेतिवेद्यम् । इदानीं स्वरूपप्रतिपादनसमये भवति च पुनः शङ्कोत्थानम् किम्परि-माण आत्मेति ? अणुपरिमाण उत मध्यमपरिमाणः शरीरपरिमाण इतिभावः आहोस्वित् महापरिमाणइति "एषोऽणुरात्मा चेतसा वेदितव्योयस्मिन् प्राणः पञ्चधा संविवेश" इत्यादिश्रुतिभिः "बालाग्रशतभागस्य शतधाकल्पितस्य च । भागोजीवः स विज्ञेयः" इत्यादिस्मृतिभिश्च केषांचित् पाञ्चरात्रादीनां सम्मतिभिश्च तावत् अणुपरिमाण आत्मेतिसिद्धौ प्रत्युच्यते यदि चित्स्वरूप अ-ण्वात्मा तर्हि अण्वात्मदेशीयाणुरूपशरीरावयवातिरिक्ते सर्व्वत्र शरीरे शैत्यबोधो न स्यात् व्यापिज्ञानगुणवत्त्वमात्मनश्चे-ति नोक्तदोष इतिचेन्न। ज्ञानस्य ज्ञानरूपस्यात्मनश्च साधर्म्यात् गुणगु-णिभाव अनुपपन्नः वैधर्म्यएव तस्य दर्शनात् अवैधर्म्ये सकलशरीरव्या-पकः सर्व्वदेहगतशैत्यग्रहीता आत्मनोबोधोज्ञानाख्यगुणश्च आत्माति-रिक्तोन सम्भवति वैधर्म्यकल्पनायाञ्च जड़स्याण्वात्मनोगुणोज्ञानं सक-लतनुव्यापकं न स्यात् गुणस्य गुण्यधिकदेशवृत्तित्वायोगात् गुणगु-णिनोःसमानदेशत्वनियमात् इतियावत् अणुपरिमाणरूपा श्रुतिस्तु "सवा एष महानज आत्मा योयम्विज्ञानमयःप्राणेषु आकाशवत्सर्वगतश्च-नित्यः"इत्यादिश्रुतिविरोधपरिहाराय आत्मनःऔपाधिकपरिच्छिन्नत्वे तात्पर्य्यवती न वास्तवाणुत्वप्रतिपादिकेतिवेदितव्यम्। बालाग्रशतभा-गस्य"इत्युपक्रम्य "सचानन्त्याय कल्पते"इतिशिष्टस्वरूपवती स्मृतिर-पिऔपाधिकपरिच्छेदतात्पर्य्यवतीअणुत्वंप्रतिपाद्य याथात्म्यतात्पर्य्या-वलम्बिनी सती आनन्त्यमेवात्मनः प्रतिपादयतीतिवेदितव्यम् । ननु यथाहि शरीरैकदेशसम्बन्धी श्रीखण्डचन्दनविन्दुः सकलदेहाह्लादको-भवति तथादेहैकदेशवर्त्ती अणुरप्यात्मा सकलदेहव्यापकः शैत्यादि-ग्रहीता भविष्यति इतिचेन्न। दृष्टान्तदार्ष्टान्तिकयोरसादृश्यात् चन्दनस्य देहैकदेशत्वं प्रत्यक्षप्रमाणसिद्धम् नात्रानुमानं सम्भवति किमात्मनः सकलदेहगतबोधःत्वगिन्द्रियस्येव सकलदेहव्यापिनः किम्वा व्याप-कस्य गगनस्येव आहोस्वित् चन्दनविन्दोरिवाणोरेकदेशस्थस्येति-संशयसत्त्वात् "हृदि ह्येषआत्मा" इत्यादिश्रुतीनाम् अणुत्वप्रतिपा-

दकश्रुतिवत् उपाधिपरिच्छेदे तात्पर्य्यान्नाणुत्वसिद्धिः। ननु नीलकमलादिगुणिवृत्तिनीलादिगुणस्य गुण्यनधिकदेशवृत्तित्वमितिव्याप्तिस्तु गुणिदीपस्य प्रभागुणस्य अन्यदेशवृत्तित्वदर्शनात् व्यभिचरतीतिचेन्न। प्रभाया अपि द्रव्यत्वस्वीकारात् तेजोद्रव्यमेव निविड़ावयवं प्रदीपः प्रविरलावयवन्तु तेजोद्रव्यमेव प्रभेतिहेतोर्न व्यभिचारसम्भवः। गन्धगन्धिनोरप्राप्तेष्वपि कस्तूरीकुसुमादिषु केषुचिद्गन्धवत्सु गन्धानुभवात् अधिकदेशवृत्तित्वसम्भवात् पुनर्व्यभिचारशङ्केतिचेन्न। गन्धवत्सु वस्तुषु गन्धाश्रयस्यैव पृथ्वीतत्वस्य सूक्ष्मावयवत्वाभ्युपगमात् गन्धिनो गन्धनिःसरणेपि गुरुत्वाननुपलब्धिरवयवातिसूक्ष्मत्वाद्वेदितव्यम्। अन्यथा "पृथिव्यामेव तं विद्यादपोवायुञ्च संश्रितम् उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः" इतिद्वैपायनोक्तेरप्रमाण्यम्प्रसज्येत् एवं नाणुपरिमाण आत्मेति सिद्धम्। आत्मा शरीरपरीमाण इत्यार्हता मन्यन्ते नतत्सम्भवः तथा सति "स वा एष महानज आत्मा" इत्यादिश्रुतिविरोधः प्रसज्येत्। यदि वेदबाह्यत्वेन नैते वेदविरोधभीता इतिचेत् युक्त्यापि न तदभिमतं आत्मनः शरीरपरिमाणत्वं सम्भवति शरीरपरिमाणत्वे आत्मनः परिच्छिन्नत्वं सम्भवति तस्मादनित्यत्वमपि घटते यद्यत्परिच्छिन्नं तत्तदनित्यम् घटादिवदित्यनुमानात् शरीरस्य नियतपरिमाणत्वाभावात् मनुष्यशारीरक आत्मा मनुष्यशरीरपरिमाणः किञ्चित् कर्म्मा विपाकोपस्थितहस्तिजन्मा कथं हस्तिशरीरं सम्पूर्णं व्याप्नुयात् तथा लघुरपि पीलिकाजन्मा कथं पिपीलिकाशरीरे मीयेत एकस्मिन्नपि जन्मनि बाल्यतारूण्यवार्द्धक्येषु समान एव तद्दोषप्रसङ्गः। ननु आत्मनः अनन्तावयवत्वं महदल्पशरीरयोः विकाशसङ्कोचशालित्वेन व्यापनप्रवेशसम्पादकमितिचेन्न अवयवानां एकदेशवृत्तित्वमनेकदेशवृत्तित्वम्वा। आद्यएकावयवदेशत्वपक्षे सर्व्वेषामवयवानां महिमानुपपत्तेः अणुरात्मा प्रसज्येत। द्वितीये नानन्तावयवाः परिच्छेदे सम्मीयेरन् इति शरीरमात्रावच्छिन्नत्वेऽवयवानां नानन्त्यमप्युत्प्रेक्षणीयम्। सङ्कोचविकाशदृष्टान्तत्वे न कूर्म्मावयवा योग्याः कूर्म्मावयवानां देशतः संख्यातश्चान्तवत्त्वदर्शनात् आत्मावयवानान्तु आनन्त्याभ्युपगमाच्च आत्मनः शरीरपरिमाणस्य उपचयापचयस्वीकारे चर्म्मादिवत् विकारित्वम् ततश्चानित्यत्वञ्च प्रसज्येत किञ्चावयववृद्ध्यपक्षयस्वीकारात् आगमापायिधर्म्मवत्त्वादवयवानां शरीरादिवदनात्म्यप्रसक्तिश्च

ततश्च निर्मोक्षप्रसङ्गः अयमेवावयव आत्मेत्यशक्यनिरूपण आत्मा नियामकहेत्वसत्वात् अपरिहार्य्यानात्म्यनिर्मोक्षदोषप्रसङ्गश्च किञ्च-आगच्छदपगच्छतामवयवानां कुत आविर्भावः तिरोभावश्च नच भूतानि आविर्भावतिरोभावस्थानानि उपपद्यन्ते अभौतिकत्वादात्मनः ततश्च तदवयवानां न कश्चिदन्यो विशेषोनिर्विशेषोवा अवयवाधारोभवितुमर्हति प्रमाणाभावात्। एवं नात्मा मध्यमपरिमाण इतिवेदितव्यम्। परिशेषात् "स वा एष महानज आत्मा" इत्यादिश्रुतिभिः औपनिषद्ब्रह्मशब्दस्यापि महत्त्वार्थकत्वात् बृहिबृद्धाविति धातोरर्थानुगमात् बृंहणात् व्यापनात् ब्रह्मेति व्युत्पत्त्या। श्रुतौ "सत्यंज्ञानमनन्तम्ब्रह्म" इत्यादिना ब्रह्मरूपात्मनः अनन्तपदेनसहप्रयोगदर्शनात् महापरिमाण आत्मेतिसिद्धम्। महत्वञ्च अनन्तपदवाच्यम् अन्तवत्त्वादिदोषवत्त्वे सर्व्वज्ञत्वादिगुणहीनत्वे अविद्यादिदोषसत्वे च न सम्भवति। ततश्च तस्य देशकालवस्तुकृतपरिच्छेदासत्त्वम् नित्यत्वम्। आविद्यकाशुद्धिशून्यत्वम् शुद्धत्वम्। जाड्यराहित्यं बुद्धत्वम्। बन्धावस्थायामपि शुद्धस्वभावात् स्वतोबन्धराहित्यात् मुक्तत्वम्। ज्ञानपदवाच्यत्वात् सर्व्वज्ञत्वम्। 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतिभिः सर्व्वशक्तिमत्वञ्च उपपद्यन्ते इतिवेदितव्यम्। आत्मा स भोक्तुरिति भोक्तुरकर्त्तुःसाक्षिणः जीवस्यस ब्रह्मरूप ईश्वर आत्मास्वरूपमिति औपनिषत्समयः अत्रमुमुक्षुभिरिदं निपुणम्विचार्य्यताम्। वेदान्तेतरदर्शनानि अत्रासम्भावितानि किम्व्यर्थानि? सार्थकानिवा? आद्ये महात्मनाम्भगवताम्विपश्चिताङ्कणाद-गौतम-कपिल-पतञ्जलि-जैमिनिप्रमुखानान्तत्रतत्र सम्मतिदर्शनात् प्रेक्षावतान्तदनुयायिनान्तत्र प्रवृत्तिदर्शनाच्च अनुपपत्तिरितिवाच्यम् परिशेषात्। द्वितीयेपक्षे स्वीकृते तु सार्थकानि तानि दर्शनानि किमर्थम्प्रवृत्तानि इति?। तत्रोच्यते परमपुरुषार्थपरम्परासाधनभूतानीतिवेदितव्यम्। "असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इतिवचनात् अरुन्धतीन्यायाच्च। अत्र वैदिकब्रह्मज्ञानोत्पत्तौ अस्माभिः वेदान्तेतरदर्शनानां खण्डनमुखेन वैयर्थ्यं ध्वनितं ततः नैषां सर्व्वत्रवैयर्थ्यं वेदितव्यम् वैयर्थ्यसार्थकत्वयोरेकाधिकरणवृत्तित्वाभावात् दृश्यते लोके तरुणी द्वितीयाश्रमे पुत्रादिप्रयोजना तुर्य्याश्रमे निष्प्रयोजना चेतियथाक्रमं यथामति प्रतिदर्शनम् एकैकसाधनत्वम्प्रदर्श्यते। कणादगौतमौन्यायदर्शकौ सप्रमाणयुक्तिप्रदर्शनपूर्व्वकम् मनसःपरमपुरुषार्थ-

साधनीभूतमननसामर्थ्यं साधयतः परिचाययतश्च किञ्चिद्विशेषणविशिष्टमीश्वरम्। कपिलः साङ्ख्याचार्योभगवान् प्रकृतिपरिचयेन वैराग्यं समुत्पाद्य तत्पदवाच्यस्य परमात्मनः आत्मभूतमवस्थान्तरापन्नम् जीवम् परिचाययति। प्रकृतिपुरुषान्यताख्यातिञ्च प्रख्यापयति। भगवान् पतञ्जलिर्योगाचार्यः परमपुरुषार्थसाधनसमाधिं मनःकषायापहम् प्रतिपाद्य किञ्चिदूनब्रह्मलक्षणलक्षितं क्लेशकर्म्मविपाकाशयापरामृष्टम्पुरुषविशेषमीश्वरम्परिचाययति । किञ्चित्समयपरिमितान्तुरीयावस्थान्दर्शयति च । जैमिनिर्मीमांसाचार्य्यः धर्म्मशास्त्रप्रवर्त्तकः ऐहिकामुष्मिकफलप्रदाऽपूर्व्वप्रतिपादकः परमपुरुषार्थपूर्व्वसाधनीभूत पापानुत्पत्तिध्वंसहेतुफलप्रयोजकसकलकर्म्माणि प्रतिपाद्य बाह्याभ्यन्तरशुद्धिं सम्पादयति श्रौतम्पूजितविचारं दर्शयति रागिणं यथाक्रमम्परमपुरुषार्थसाधनीभूतान्तःकरणशुद्ध्या ज्ञानाधिकारिणं सम्पाद्यपारम्पर्य्येण सिद्धिं संसाधयति "कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्यादिस्मरणात्। केषाञ्चित् कर्म्मानपेक्षा नैसर्गिकीसिद्धिः दृश्यते शुकादीनाम् तत्र प्राक्तनसम्पादितकर्म्मशुद्धिसत्वसम्पादिता सिद्धिर्वेदितव्या। अत्रदेहात्मवाद्यादि शून्यात्मवाद्यन्ता नास्तिका दुर्दैवतः शोच्या एव वेदबाह्यत्वात् शिष्टापरिगृहीतत्वाच्च । स्वरूपप्रतिपादनसमये भवति समाक्षेपः किमिदम्ब्रह्मस्वरूपम्प्रमेयम्वा प्रमेयत्वे किम्प्रत्यक्षस्य विषयःकिमनुमानस्य किमुपमानस्य किमर्थापत्तेः किमामागमस्येति नाद्यः"अशब्दमस्पर्शमरूपमव्ययम्" इत्यादिश्रुतेः ब्रह्मणः प्रत्यक्षगुणशब्दाद्यविषयत्वात् । नद्वितीयः "नैव तस्य च लिङ्गम्" इत्यादिश्रुतेः "अचिन्त्याःखलु ये भावा न ताँस्तर्केण योजयेद्"इति। प्रकृतिभ्यःपरं यच्च तदचिन्त्यस्य लक्षणम्" इत्यादिस्मृतेः । अनुमानस्य लिङ्गिलिङ्गविषयत्वात् चिन्तनानुकूलत्वाच्च। न तृतीयः गोसदृशोगवय इति। सति सादृश्ये उपमानं सम्भवति"न तत्समश्च"इत्यादिश्रुतिभिः तदनुपपत्तेः। न चतुर्थः खल्वव्यापकवस्तुनः एकत्र भावादनुपलब्धावन्यत्रादर्शनेपि भावज्ञानम् अर्थापत्तिः। यथाजीवतोदेवदत्तस्य एकत्र भावदर्शने न अन्यत्रभावस्यादृष्टस्य कल्पनम् ब्रह्मणः व्यापकत्वात् सर्व्वत्रासत्वसम्भवात् भावरूपत्वात् "यतो वा इमानि भूतानिजायन्ते यतोजातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति"इत्यादिश्रुत्या कालत्रये सत्ताश्रवणात् "आकाशवत्सर्व्वगतश्च नित्यः" इत्यादि श्रुत्या व्यापकत्वश्रवणाच्च "नाभावोविद्यते सतः" इत्यादिस्मृत्या असत्तानिषेधाच्च

नपञ्चमः "यत्तदद्रेश्यमग्राह्यम्" "यतो वाचोनिवर्त्तन्ते" इत्यादिश्रुतिभिः आत्मनः आगमाप्रमेयत्वम् श्रूयते "तन्त्वौपनिषदम्पुरुषम्पृच्छामि" इत्यादिश्रुत्या आत्मनः उपनिषद्गम्यत्वं श्रूयते ततः अप्रमेयत्वप्रतिपादिकायाः श्रुतेः उपनिषद्गम्यत्वेन प्रमेयत्वप्रतिपादिकायाः श्रुतेश्च परस्परम्विरोधः सम्भवति उभयोर्म्मध्ये कस्याश्चिदप्रामाण्यम् प्रसज्येत तत्तु न युक्तम् श्रुतेः अपौरुषेयत्वात् स्वतः प्रमाणत्वाच्च तत्रोच्यते आगमप्रमापणम् न सदसतः परम् ब्रह्मस्वरूपम् नामरूपजातिगुणादिहीनम् इदमो निर्द्देशेन स्वरूपलक्षणेन प्रभावयितुं शक्नुयात् किन्तु अतद्व्यावृत्या अपवदन्नध्यारोपम् मायिकं नेतिनेत्यादिश्रुतिभिः "यन्नकिञ्चित्तदेवतत्" इत्यादिस्मृतिभिश्च तटस्थलक्षणेनैव तल्लक्षयति। तत्र त्रिविधानां शब्दप्रवृत्तीनामयोगात् अतद्वृत्या एव योगाच्च। शब्दप्रवृत्तयस्तु मुख्यालक्षणागौणीभेदेनत्रिधा। मुख्यापि रूढियोगभेदेन द्विधा। रूढिःनाम्ना स्वरूपेण जात्या गुणेन च निर्द्देशार्हे वस्तुनि संज्ञासंज्ञिभेदेन प्रवृत्तिभेदेन प्रवर्त्तते। यथा डित्थोगौः श्वेत इति। लक्षणा च तेनैव सङ्केतेनाभिहितार्थसम्बन्धिनि। यथागङ्गायां घोष इति। गौणी चाभिहितार्थलक्षितगुणयुक्तेतत्सदृशे वा यथा सिंहोदेवदत्तइति। तथास्मर्य्यते "अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते। लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता" इति। योगवृत्तिस्तु एतत्त्रिविधप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन-यथाजलजमौपगवः पाचकः खड्गशूलो हन्तीति सिंहोग्निर्माणवकइति। तत्रानिर्द्देशे ब्रह्मणि रूढवृत्तिर्न सम्भवति निर्गुणे गुणवृत्तिर्न सम्भवति सदसतः परे कार्य्यकारणाभ्याम्परस्मिन्नसङ्गे केनचिदपि सम्बन्धाभावान्न लक्षणगुणवृत्ती सम्भवत इत्यर्थः। अथ अतद्व्यावृत्तिरूपशब्दप्रवृत्तिप्रकारः प्रदर्श्यते "परेण नाकं निहितं गुहायां विभ्राजते यद्यतयोविशन्ति" इत्यादिश्रुत्या ब्रह्मणो गुहानिहितत्वम्प्रतिपाद्यते ततश्चपञ्चकोशनिरासेन सर्वान्तरात्मा ब्रह्मेतिलक्ष्यते। तावत्कोशपञ्चकं क्रमेण निरस्यते "एष आत्मा अन्नमयः" इत्यादिश्रुत्या अन्नमयपदवाच्यदेहः आत्माभवितुमर्हति तत्रोच्यते जनकजननीभुक्तयवव्रीह्याद्यन्नजः शुक्रशोणितसम्भूतः क्षीराद्यन्नवर्द्धितः प्रागूर्ध्वञ्च अभावभूतः प्राक् जन्मनि अस्यासतोदेहस्य स्वारम्भककर्म्मोपादकत्वासम्भवात् भाविजन्मनि अस्यासतोदेहस्य वर्त्तमानशरीरसम्पादितकर्म्मणो भोगो न सम्भवति तथा सति अकृताभ्यागमकृतप्रणाशदोषप्रसङ्गात् देहोनात्माभवितुमर्हति श्रुतिस्तु सोपानरूपिणी स-





त्वान्तरत्वप्रतिपादनतात्पर्य्यवतीतिवेद्यम्। "अन्योन्तर आत्मा प्राणमयः" इत्यादिश्रुतिभिः प्राणमयकोशवाच्यः प्राणः आत्माभवितुमर्हति। तत्रोच्यते वायुः पदादिमस्तकपर्य्यन्तं व्याप्तः देहेबलं प्रयच्छन् इन्द्रियाणाम्प्रवर्त्तकः प्राणपदवाच्यः नात्माभवितुमर्हति अचैतन्यात् अन्नमयत्वाद् बुभुक्षापिपासावत्वाच्च। श्रुतिस्तु पूर्व्ववदेवज्ञातव्या "अन्योन्तर आत्मा मनोमयः" इत्यादिश्रुत्या मनोमयकोशपदवाच्यं मनः आत्माभवितुमर्हति। तत्रोच्यते देहेऽहम्भावं गेहादौ मदीयत्वाभिमानं कुर्व्वत् कामक्रोधादिवृत्तिमत्वेनानियतस्वभावम् अन्नमयं मनः नात्माभवितुमर्हति। अत्रविशेषणनिष्ठहेतुगर्भत्वम्वेदितव्यम्। श्रुतिस्तु पूर्व्ववदिति च वेदितव्यम्। "अन्योन्तर आत्मा विज्ञानमयः" इत्यादिश्रुत्या विज्ञानमयकोशपदवाच्या बुद्धिरात्माभवितुमर्हति। तत्रोच्यते चिदाभासयुक्ता सुषुप्तिकाले विलयनस्वभावा जागरणकाले आनखाग्रपर्य्यन्तम् वपुषि वर्त्तमाना स्वप्नकालेपि वृत्तिमती बुद्धि र्नात्मा भवितुमर्हति विलयाद्यवस्थावतत्त्वात्। श्रुतिस्तु पूर्व्ववदेव वेदितव्यः। ननु मनोबुद्ध्योरन्तःकरणत्वसामान्यात् नोपपन्ना मनोमय विज्ञानमय रूपेण कोशद्वयकल्पनेति समाक्षेपे समाधानम् सत्यपि अन्तःकरणसामान्ये अन्तःकरणङ्कर्त्तृत्व करणत्वाभ्याम् परिणमते ततः कर्त्तृकरणे विज्ञानमनःशब्दवाच्ये भवत इत्यर्थः। प्रसिद्धञ्च मनोविमर्शात्मकं सङ्कल्पविकल्पात्मकमितियावत्। बुद्धिश्चनिश्चयात्मिका अध्यवसायात्मिकेतियावत् "तैरन्तःकरणं सर्व्वैर्वृत्तिभेदेन तद्द्विधा। मनोविमर्शरूपं स्याद्बुद्धिःस्यान्निश्चयात्मिका" इत्युक्तेः। दृश्यतेऽपि एकस्यैव देवदत्तस्य याचकत्वपाचकत्वरूपवृत्तिभेदेन याचकत्वम्पाचकत्वञ्च। एक एव देवदत्तः याञ्चाकाले याचकः कथ्यते पाककाले पाचकश्चेतिभावः। तैत्तिरीयशाखायामन्नमयम्प्राणमयम्मनोमयम्विज्ञानमयञ्च अनुक्रम्याम्नायते "तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमयः" इत्यादि अविद्यारूप कारणशरीरावच्छिन्नः भोक्ता आनन्दमय कोशपदवाच्यः प्राज्ञः आत्मा भवितु मर्हति तत्रोच्यते पुण्यकर्म्मफलानुभवकाले काचित् अतिसूक्ष्मत्वेन अनिर्वचनीयेतियावत्। बुद्धिवृत्तिः अन्तर्गा सती आनन्दप्रतिविम्बभागिनीभवति आत्मस्वरूपस्य आनन्दस्यप्रतिविम्बं भजते इतियावत् सैव पुण्यकर्म्मफलभोगोपरमे सति निद्रारूपेण लीयते सैव वृत्तिः प्राज्ञचैतन्यावस्थितिः प्राज्ञस्य प्राज्ञत्वकारिणी। प्राज्ञत्वं नाम प्रकर्षेण अज्ञत्वम् तस्य सम्पादिनीति यावत् "सति सम्पद्य न विदुः सति सम्पाद्या-

महे" इत्यादिश्रुतेः तप्तायःपिण्डवत् प्रतिविम्बभाग्धीवृत्तिप्रतिविम्ब-रूपप्राज्ञयोस्तादात्म्यम् वेदितव्यम्। ततश्च प्राज्ञभिन्नत्वमिवापन्ना सैव वृत्तिः आनन्दमयकोशपदवाच्या भवति। भवतु वा तद्वृत्तिमान् प्राज्ञः आनन्दमयकोशपदवाच्यः प्रतिविम्बरूपश्चिदाभास इति यावत्। अयमप्यानन्दमयोनात्मा भवितुमर्हति कादाचित्कत्वात् वृत्तिवृत्तिमतोरूभयोरपि कादाचित्कत्वं अनियताल्पकालिकत्वं प्रसिद्धमेव सुषुप्तौ तथा दर्शनात्। ननु विद्यमानानामानन्दमयादीनां सर्वेषामनात्मत्वस्वीकारे क आत्मेत्याकाङ्क्षायामुच्यते "ब्रह्म पुच्छं प्रतीष्ठा" इत्यादिश्रुतेः बुद्ध्यादौ प्रतिविम्बतयावस्थितस्य प्रियादिशब्दवाच्यस्य आनन्दमयस्य विम्बभूतः कारणभूत इति यावत्। य आनन्दः असावेवात्मा भवति। सर्व्वदा स्थितेः नित्यत्वादितियावत्। "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति। कोह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयति। सैषानन्दस्य मीमांसा भवति आनन्दो ब्रह्मेति व्यजानात् विज्ञानमानन्दम्ब्रह्म" इत्यादिश्रुतिभ्यश्च। ननु "आनन्दमयोऽभ्यासात्" इत्यत्र ब्रह्मसूत्र आनन्दमय एवात्मेति स्वीक्रियते। अभ्यासात् ब्रह्मण्येव बहुकृत्व आनन्दशब्दप्रयोगात् ततः सूत्रकारस्य भगवतोव्यासस्यानुमत्या आनन्दमय एवात्मा उपपद्यते। स्यादेतत् यदि ब्रह्मणः आनन्दात्मनः प्रतिपादिकासु श्रुतिषु आनन्दमयशब्दप्रयोगो लभ्येत। न च स लभ्यते। किन्तु आनन्दपदमात्रस्यैव प्रयोगो दृश्यते। "विकारशब्दान्नेति चेन्नप्राचुर्य्यात्" इत्यत्र ब्रह्मसूत्रे आनन्दोत्तरमयट आनन्दविकारार्थत्वं प्रतिषिध्य आनन्दप्राचुर्यार्थकत्वं प्रतिपादयति। तन्न आनन्दमये प्रतिविम्बरूपे सम्भवति प्रतिविम्बस्य चिदाभासस्य प्राज्ञस्य आवृतस्वरूपत्वात्। ततः प्रतिभाति ब्रह्मसूत्रे शाङ्करभाष्ये आनन्दमयशब्दप्रयोगः आनन्दमयकोशगतानन्दप्रतिविम्बकारणभूतानन्दपर एवेति वाच्यम्। भवति तत्परत्वोपपत्तिः विम्बस्य प्रतिविम्बेन सह सम्बन्धसम्भवानुकूललक्षणावृत्तियोगात्। यद्वा आनन्दरूपविम्बस्य आनन्दमयरूपप्रतिविम्बस्य च न वास्तविको भेदः भेदस्य मायिकत्वात् ततस्तयोर्विम्बप्रतिविम्बयोरभेदाभिप्रायेणैव आनन्दाभिन्ने आनन्दमये आत्मत्वं स्वीकृतं परन्तु मायिकभेदस्वीकारेणैव बन्धमोक्षाभ्युपगमात् मायिकभेदं स्वीकृत्यैव पञ्चदश्यादौआनन्दस्यैवात्मत्वंस्वीक्रियत इति। तस्मात् सर्व्वमनवद्यं व्याख्यानमिति वेदितव्यम्। इदं न इदं न इति। नेति नेति उपदिशन्ती काण्ववाजसनेयिक-

श्रुतिः निषेधावधित्वेन अद्वयम्ब्रह्म अशेषयत् "आदिशन्त्यथ नेति नेति निषिद्धरूपमशेषतः काण्ववाजसनेयिकश्रुतिरप्यशेषपदद्वयम्,, इत्याद्युक्तेः "यन्न किञ्चित्तदेव तत्,, इत्यादिस्मरणाच्च अतद्व्यावृत्त्या निषेधावसानभूमिर्ब्रह्मेति वेदितव्यम्। तच्च अखण्डसच्चिदानन्दरूपं श्रुतिस्मृतिप्रसिद्धमितिवेद्यम् तदेवजीवस्य संसारिणः चित्प्रतिविम्बस्य विम्बरूपः कारणभूतः स्वरूपमिति वेदितव्यम्। तस्यैव विस्मृतिः "अनुभूतविषयासम्प्रमोषः स्मृतिः,, इति पातञ्जलोक्तेः अनुभवजन्यसंस्कारजन्यज्ञानविषयीभूता चित्तवृत्तिः स्मृतिरिति यावत्। ग्रहणाकारपूर्व्वत्वग्राह्याकारपूर्व्वत्वाभ्यां बुद्धिस्मृती भिद्येते। सा च स्मृतिः द्विधा भावितस्मर्त्तव्या अभावितस्मर्त्तव्या चेति। स्वप्ने भावितस्मर्त्तव्या जाग्रति त्वभावितस्मर्त्तव्येति सर्व्वाः स्मृतयः प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनामनुभवात् प्रभवन्ति। तस्या एव स्मृत्याः पूर्व्वभावरूपायाः पश्चात् असत्ता किञ्चित्कारणनिबन्धना विस्मृतिःसंसृतिः पूर्व्वव्युत्पादिता संसार इति वेदितव्यम्। तत्र शङ्क्यते संसारस्य अनादित्वात् जीवस्य स्वरूपानुभवायोगात् कथं स्वरूपविस्मृतिः सम्भवति। तत्रोच्यते प्रलये सुषुप्तौ च जीवात्मा स्वरूपसम्पन्नो भवति। "सता सौम्य तदा सम्पन्नः स्वमपीतो भवति,, इत्यादिश्रुतेः "आसीत् सदैव हि भवान् सम्पद्य यत्र मधुनीव रसाः सुषुप्तौ,, इत्यादिस्मृतेश्च सुषुप्तिप्रलयकालीनस्यैवानुभूतस्य स्वरूपस्य विस्मृतिरत्रोच्यते इति वेदितव्यम्। भवति च श्वेतकेतूपदेशश्रतिस्वरसावलम्बिनी स्मृतिः "अब्धिर्यथाजलधरैरुपनीयनीतोनद्यादिभावमुदधित्वमतिं जहौ स्वाम् एवम्भवानुपधिभिः खलु विस्मृतः स्वम् सद्ब्रह्म तत्त्वमसि संस्मर पूर्णभावम्" इति। भवति च पुनः शङ्कोत्थानम् किङ्कारणनिबन्धनाविस्मृतिरेषेति। तत्रोच्यते "सतिसम्पद्य न विदुः सति सम्पद्यामहे सुखमहमस्वाप्सम् नैव किंचिदवेदिषम्,, इत्यादिश्रुतेः "अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा। साकारशरीरं स्यात् प्राज्ञस्तत्राभिमानवान्" इत्याद्युक्तेश्च सुषुप्तौ अज्ञानसद्भावो दृश्यते। ततः प्रलयकालेपि अज्ञानसद्भावोनुमीयते सुषुप्तिप्रलययोः सादृश्यात् तयोः साहचर्य्याच्च अज्ञानस्यैव विस्मृतिकारणत्वमुपपद्यते "अन्नम्प्राणोमनोबुद्धिरानन्दश्चेति पंचधा। कोशास्तैरावृतः स्वात्मा विस्मृत्या संसृतिं व्रजेत्" इत्यादिवचनात् अत्रवाक्ये आवृतशब्दश्रवणेन आवरणकारिणी आवृतिशक्तिरविद्यापदवाच्या अनुमीयत इति वेदितव्यम्। अस्याः स्मृतेः

स्वारस्यात् सर्व्वत्र कोशेषु अवस्थात्रयरूपेषु विस्मृतस्वरूप एवविद्यते। अवस्थानां तुर्येतराणाम्बुद्धयवस्थानभूतसांसारिकदशात्वाभ्युपगमात् परन्तु तथा सति सुषुप्तिदशायामपि सांसारिकदशात्वम्प्रसज्यत एव। तत्रोच्यते अविद्यासद्भावात् तत्रापि सांसारिकदशात्वमस्त्येव परन्तु स्वरूपसम्पत्त्या वेदप्रमाणसिद्धया सौषुप्तसर्व्वभोगोपरमसौख्यदर्शनाच्च स्वरूपसम्पन्निष्ठमसांसारिकदशात्वमितरावस्थाविलक्षणमुपपद्यत एव इति ।

अत्रभाष्ये स्वरूपविस्मृतिरूपसंसारहेतुत्वेन आवृतिशक्तिरूपा अविद्याप्रतिपादिता सैवात्र अग्रिमसूत्रे श्रीमता सूत्रकारेण विशदीक्रियते ।

## तद्धेतुरविद्या देहादावात्मबुद्धिस्वरूपा अनादिः सान्ता च १।१।४॥

तद्धेतुरत्र तच्छब्देन तृतीयसूत्रादिमावयवभूतसंसृतिशब्दस्य उपसर्ज्जनस्यापि सन्निकृष्टस्वरूपविस्मृतिशब्दलक्ष्यभूतस्य अविद्याकार्य्यत्वेन प्रसिद्धस्य परामर्शः तस्याः संसृतेः हेतुः कारणम् तद्धेतुः संसृतिकारणमितियावत्। अविद्या "विदज्ञाने" इतिधातोरर्थानुगमात्। विद्याशब्दस्य ज्ञानार्थकत्वम्वेदितव्यम् । न विद्या अविद्या ज्ञानप्रतिद्वन्द्वि अज्ञानमितियावत्। अहमज्ञोस्मि इत्यनुभवप्रमाणात् सिद्धमनाद्यज्ञानम् अहम्पदलक्षितशुद्धचैतन्ये स्थितम् शुद्धचिद्रूपस्वरूपग्राहकम् चैतन्यम् आत्मस्वरूपम् आवृत्य सर्व्वज्ञत्वनिरतिशयानन्दत्वादिनैजम्भावम्प्रच्छाद्येतियावत् चैतन्यसत्तयैव स्फुरति प्रसिद्धयतीतियावत् । यथा- राहुः तमोरूपः चन्द्रम्प्रकाशरूपमाच्छाद्य चन्द्रचन्द्रिकयैवस्फुरति । तमोरूपोलोके दृश्यत इतियावत्। तच्च अज्ञानम् आवरणानन्तरम् मिथ्यैव संसारिणः संसारमुद्भावयति । अहमिदमित्यादिभ्रमेण संसारिणं चेतनं भ्रमयतीतियावत् । तच्चाज्ञानंदुर्निरूपं चित्यध्यस्तत्वात् स्वरूपतो ब्रह्मभिन्नत्वादसत् । चिद्गतेदंतयास्फुरत् ब्रह्माभिन्नत्वेसत् इति स्वप्नवदनिर्वचनीयमितिवेद्यम् । स्वसिद्धौ स्वहेतुत्वादृष्टेः सकलाध्यासहेत्वज्ञानाध्यासे हेत्वन्तरासिद्धेर्नाज्ञानरूपाविद्यारिति चेदुच्यते या चिद्धाने चितिरिव भेदे भिदेव निजपरयोर्निर्वाहे स्वतः समर्था सम्भाव्येतरघटनापटीयसी सा अविद्या विलासेन जीवत्वादिमहाभ्रान्तिं जनयति अध्यासम्प्रकटयतीति यावत् । सामान्यतो भासमानेपि वि-

शेषतः अभासमाने पदार्थे आरोप्यभिन्ने आरोप्यबुद्धिः अध्यासः सचाध्यासः अहमिति भासमाने प्रत्यगात्मनि साक्षिणि साक्षात्प्रतीयते अज्ञोहम् स्थूलोहम् मनुष्योहम् निर्बलोहम् मैथिलोहमित्याद्यहन्तारूपः मम पुत्राः कथं जीवेयुरित्यादि ममतारूपश्च स एषः अहन्ताममतारूपोध्यासः द्विविधः। आत्मनि अनात्मधर्म्मारोपरूप एकः। अनात्मनि आत्मधर्मारोपरूपोद्वितीयः। तद्यथा शुद्धोहम्बुद्धोहमानन्दोहम् स्थिरोहमित्यादि शुद्धत्वाद्यात्मधर्म्माणामनात्मनि देहे अध्यासः। युवाहम् गौरोहम्पटुरहमिति आत्मनि देहधर्माणामध्यासः। इत्युभयविधः परस्परतादात्म्यसंसर्गाध्यास इतिवेदितव्यम्। सामान्यभासमानत्वेपि विशेषाभासमनत्वे दृष्टान्तम्प्रदर्श्यते। ततश्च दार्ष्टान्तिकमप्यज्ञानम् प्रद्रक्ष्यते वक्ष्यमाणयोक्त्या "अध्येतृवर्गमध्यस्थ पुत्राध्ययनशब्दवत्। भानेप्यभानम्भानस्यप्रतिबन्धेनयुज्यते। प्रतिबन्धोस्तिभातीति व्यवहारार्हवस्तुनि। तन्निरस्य विरुद्धस्य तस्योत्पादनमुच्यते। तस्यहेतुः समानाभिहारः पुत्रध्वनिश्रुतौ। इहानादिरविद्यैव व्यामोहैकनिबन्धनम्" इति अत्र स्मृतौ इहशब्देन सामान्यतो भासमानात्मवस्तुनि विशेषतः अभासमाने इत्यर्थोवेदितव्यः। अत्राहमज्ञोस्मीत्यनुभवात् अहमात्मनि अज्ञानम्प्रतिपादितम्। अहमात्मा च अशुद्धं चैतन्यं प्रतिपादितम् तत्रकथम् अहमितिशब्देन शुद्धञ्चैतन्यमेव प्रतिपाद्यते नान्येपदार्थाः इतितत्रोच्यते अहम्प्रत्ययार्थो देहोवा प्राणोवा इन्द्रियाणिवा मनोवा ऽहङ्कारोवा विश्वोवा तैजसोवा प्राज्ञोवा आद्येस्वप्नदेहोवा जाग्रद्देहोवा उतोभयम्वा। नाद्यः जाग्रतिनाहमस्मीति तदाभावप्रसङ्गात् प्रत्यक्षविरोधाच्च स्वप्नदेशनाशात् अहमर्थस्यापि नाशप्रसङ्गात् न द्वितीयः स्वप्नेपि यस्य कस्याप्यहम्प्रत्ययस्योदयात्। मृतेदेहे विद्यमानेप्यहम्प्रत्ययोदयादर्शनाच्च। न तृतीयः द्वयोः सामानाधिकरण्यायोगात्। नादिमो द्वितीयः पक्षः स्वभावजड़त्वात् प्राणस्य जाग्रति स्वप्ने च निजपरयोरज्ञातृत्वाच्च तृतीये एकस्य वा इन्द्रियस्य सर्व्वेषाम्वाहमर्थत्वं शब्दादिष्वेकस्यैवार्थस्य उपलब्धिप्रसङ्गात्। शब्दादेः सर्व्वस्य सर्व्वत्रोपलब्धिदर्शनात् प्रत्यक्षविरोधः प्रसज्येत। न द्वितीयः अहम्मनुष्य इत्यत्र करणादीनाम् प्रत्येकम् मनुष्यशब्दार्थत्वे मनुष्यबहुत्वसिद्धौ अयमेकोमनुष्य इति प्रत्यक्षसिद्धमनुष्यैकत्वव्यवहारविरोधात् अहञ्चक्षुषापश्यामि पाणिना स्पृशामि इति दृगादिभ्यो भिन्नस्याहमर्थत्वस्य सिद्धौ इन्द्रियाणां तदनुपपत्तेः। नापिचतुर्थः

चक्षुरादिवत् करणसादृश्यात् "मनसाह्येव पश्यति" इति श्रुतेः करणत्वेननिर्देशविरोधाच्च । नापि पञ्चमः विकारित्वात् ज्ञातृत्वानुपपत्तावहमर्थत्वानुपपत्तेः सुषुप्तौ लयदर्शनाच्च अयमहङ्कारी अयं निरहङ्कारी इति अहङ्कारस्य अनैकान्तिकत्वात् शैशवे मया द्राक्षाभुक्तेति तेन तेन सहैव विकारेण विनश्यतोऽहङ्कारस्य विकारिणः शैशवे भुक्तद्राक्षानुभूतिरचिरकालिकाचिरकालानन्तरम् वृद्धत्वे नोपपद्यते तदनुपपत्तावहमर्थत्वं न सम्भवति नापिषष्ठो नापिसप्तमो नाप्यष्टमश्च विश्वादीनाम्प्रत्येकम् जाग्रत् स्वप्न सुषुप्ति दशावत्त्वात् अन्वयव्यतिरेकभागित्वात् योहम् स्वप्न मद्राक्षम् योहम् सुखमस्वाप्सम् सोहम् जागर्मि इत्यन्यस्य स्थानत्रयविलक्षणस्य नित्यसत्ताकस्य अहम्प्रत्ययार्थस्य सत्त्वात् "शिवं शान्तञ्चतुर्थम्मन्यन्ते" इत्यादिश्रवणात् "त्रिषु धामसु यद्भोग्यम् भोक्ता भोगश्च यद्भवेत् । तेभ्योविलक्षणः साक्षी चिन्मात्रोहं सदाशिवः" इत्यादिस्मरणाच्च विकल्पितेदेहादिप्राज्ञपर्य्यन्ताष्टकान्यस्यात्मनः सिद्धान्तपक्षेनिर्देशात् सिद्धनित्योपलब्धिरूपस्यैवात्मनः नित्यानिर्लुप्तज्ञानरूपस्य वास्तविकमहम्प्रत्ययार्थत्वम् न तदाश्रितायाः अविद्याया इति वेदितव्यम् । अविद्यायाः संसारहेतुत्वम् "मयाध्यक्षेणप्रकृतिः सूयतेस चराचरम् । हेतुनानेन कौन्तेय जगद्विपरिवर्त्तते । आत्माज्ञानाज्जगद्भाति तज्ज्ञानाद्भासते नहि । रज्वज्ञानादहिर्भाति तज्ज्ञानाद् भासते नहि" इत्यादि भगवद्गीताष्टावक्रगीतावाक्याभ्यामपि स्मर्य्यते । सा अविद्या किंलक्षणा इत्याकाङ्क्षायां भगवान्सूत्रकारः अविद्याया विशेषणानुवादेन तल्लक्षणम्प्रतिपादयति "देहादावात्मबुद्धिस्वरूपेति" अपि च आदिपद लक्षितगेहादौ आत्मीयबुद्धिस्वरूपेति वेदितव्यम् । अध्यासस्य अहन्ताममतारूपद्वैविध्यप्रसिद्धेर्देहादावात्मबुद्धिस्वरूपेति एकदेशप्रदर्शनेन आत्मनि देहादिबुद्धिस्वरूपा इत्यपि योजनीयम् वेदितव्यम् अनात्मनि आत्मधर्म्मारोपरूपत्वेन च अध्यासस्य द्वैविध्यप्रसिद्धेः यथा च प्रदर्शितमप्यत्रैव चतुर्थसूत्रभाष्ये अध्यासस्वरूपप्रतिपादनावसरे अविद्यास्वरूपप्रदर्शनार्थम् सूत्रकारस्वरसानुसारभगवान् पतञ्जलिर्योगाचार्य्यः अविद्याम्विशिनष्टि वक्ष्यमाणयोगसूत्रेण "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति अनित्ये अध्रुवे प्राकृतिकवस्तुनि नित्यख्यातिः ध्रुवत्व निश्चायिकाबुद्धिः तद्यथा ध्रुवा भूमिः ध्रुवः स्वर्गः अमृताः स्वर्गिण इति ।

तथा अशुचौ अपवित्रे परमवीभत्से देहे शुचिख्यातिः पावित्र्यग्रहः यथा लालाष्ठीवश्लेष्मागारम् कामिनीमुखम् शारदपूर्णनिशाकरम् तस्याः उत्तानमृतमण्डूकनिभम् अवमेहनभूमिम् परमसुखावनिम्मनोजराजधानीम्मन्यन्ते रागिनोमूढ़ाः इति। एतेन अधर्म्मे धर्म्मप्रतीतिः अनर्थे चार्थप्रतीतिरपि वेदितव्या तथादुःखे मनउद्वेगनिमित्तेवस्तुनि सुखख्यातिः मनःप्रसादनिमित्तावस्तुबुद्धिः यथा च स्मर्य्यते मनुष्यस्वभावः "दुःखे च सुखमानिनः" यथा च कटुतिक्तादिभक्षकः दुःखमनुभवन् स्रवन्नेत्रजलः सीत्कारसहितः शिथिलदन्तावलिः सुखमभिमन्यते तथा अनात्मनि स्थावरजङ्गमेषु भोगायतने शरीरे वा पुरुषोपकरणे मनसि वा आत्मख्यातिःअविद्याव्यक्तमव्यक्तम्वासत्वं स्वरूपत्वेनाभिमत्य तस्य सम्पत्तिमनुनन्दति स्वरूपसम्पत्तिमभिमन्यमानःतस्य विपत्तिमनुशोचति स्वरूपविपत्तिमभिमन्यमानः सर्व्वः अप्रतिबुद्धः संसारीपुरुषः इत्येषा चतुष्पदा भवत्यविद्या अविद्यास्मितारागद्वेषाभिनिवेशरूपप्रसिद्धपञ्चक्लेशेषु तमोमोहमहामोहतामिस्रान्धतामिस्रेत्यपराख्येषु प्रधानभूता प्रथमा प्रसवभूमिरुत्तरेषामस्मितादीनामितिवेदितव्यम् सत्यविद्यासत्वे अस्मितादिसत्त्वम् तदसत्वे तदसत्वमितिवेदितव्यम्। पुनरविद्याम्विशिनष्टिकरुणापूरितहृदयः गुरूवरः श्रीमान्सूत्रकारः अनादिःन आदिर्यस्या इति अनादिः शास्त्रसम्मतवीजाङ्कुरन्यायसिद्धसृष्टिप्रलयप्रवाहरूपसंसारानादित्वेसिद्धे तद्धेतोरविद्यायाः अनादित्वम् सिद्धमेवेति वेद्यम्। स्मर्य्यतेपि। "इहानादिरविद्यैव" इत्यादि "अनादिमायया सुप्तो यदाजीवः प्रबुध्यते" इत्यादिवचनैरविद्याया अनादित्वम् पुनरप्यविद्याम्विशिनष्टि श्रीमान्सूत्रकारः अविद्यायाः अनादिरूपविशेषणश्रवणेनैव मुमुक्षुरविद्याया आनन्त्यम्माप्रतीयात्। ततश्चअमृतोत्पत्त्यनुत्साहो माभूयात् इत्याशयेन कथम्भूता पुनरपि सा अविद्या सान्ता अन्तेनसहिता सान्ता विनाशशालिनी इत्यर्थः "अनादिमायया सुप्तोयदा जीवःप्रबुद्ध्यते अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा" इति वेदान्तानुकूल सप्तपदार्थविद्भिराचार्यैरुक्तवाक्ये मायया सुप्त इति दर्शनात् मायापदवाच्याया अविद्याया जीवावृत्तिरूपिण्या निद्रारूपत्वं व्यज्यते बुद्ध्यते इति शब्दस्य दर्शनात् मायरूपजीवनिद्राभङ्गोनुमीयते सान्तत्वमुपपद्यत इति वेदितव्यम्। स्मर्य्यतेपि "प्रकृतिःपुरुषस्येह दह्यमाना त्वहर्न्निशम्। तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः" इत्यादि "गुणा-

नेतानतीत्य त्रीन्देहीदेहसमुद्भवान् जन्ममृत्युजरादुखैर्विमुक्तोमृतम-श्नुते" अत्रापित्रिगुणातिक्रमणेन त्रिगुणवत्या अविद्याया अन्तवत्त्वम् सूच्यते भगवद्वाक्यात् "रङ्गस्यदर्शयित्वा निवर्त्तते नर्त्तकी यथा नृत्यात् पुरुषस्यतथात्मानम् प्रकाश्यविनिवर्त्तते प्रकृतिः" इत्यादिकापिलोक्ते-रपि अविद्याया अन्तवत्त्वमुपपद्यते। ननु सान्तत्वं द्विविधं दृश्यते लोके यथा सान्तस्य दिनस्य सान्तत्वम् पुनःपुनरनुभूयमान मनत्यन्तम् तथा कलादिप्रलयपर्यन्तस्य प्रत्येकम्परिमितस्य कालस्य वेदितव्यम्। अन्ये-षामपि आगमापायिनामन्तवत्त्वम् तथैव वेदितव्यम्। रज्ज्वावहिरिति अध्यासरूपपदार्थस्य सान्तस्य नायमहिः किन्तु रज्जुरिति बोधेन सान्तत्वमत्यन्तमिति तथा प्रध्वस्तघटा नामपि सान्तत्वम्वेदितव्यम्। तत्र भवति संशयः अविद्यायाः सान्तत्वं किम्विधम् अनत्यन्त-मत्यन्तमुभयम्वा। नाद्यः निर्मोक्षप्रसङ्गात्। नद्वितीयः संसार हेतो रविद्याया अत्यन्तान्तवत्याम् सत्याम् सृष्टिप्रलयरूपप्रवाहा-त्मकस्य अनाद्यन्तस्य संसारस्य प्रविनाशप्रसङ्गात्। ततश्च निर्व-न्धप्रसङ्गात् शास्त्रस्य स्वर्गनरकादिकल्पनाविधिनिषेधप्रतिपादन-वैयर्थ्याच्च। न तृतीयः द्वयोरनन्तत्वात्यन्तत्वयोः सामानाधिकरण्यायो-गात्। एवमविद्यायाः अन्तवत्त्वम् न अनत्यन्तम् न अत्यन्तम् नोभयविधम् इति। पूर्व्वपक्षे सिद्धे प्रसज्यते अविद्यासान्तत्वप्रतिपादकपूर्व्वोक्तवाक्-याप्रामाण्यम् निर्मोक्षप्रसङ्गश्च उपतिष्ठति मोक्षशास्त्रवैयर्थ्यापत्तिश्च सम्भवति। तस्मात् स्वीकार्य्यमेवाविद्यासान्तत्वम् वक्ष्यमाणप्रकारे-णेति वेदितव्यम्। तथाहि यथा एकमेवाकाशगतम् सूर्य्यविम्बम् जलान्वितानेकघटेषु अनेकप्रतिविम्बभावं प्राप्नोति तथैक एवाखण्ड-सच्चिदानन्दात्मा विम्बरूपःअनेकान्तःकरणेषु जीवोपाधिभूतेषु अवि-द्यारूपेषु सस्थूलसूक्ष्मकारणशरीरेषु संसारित्वमनेकप्रतिविम्बभावम् जीवत्वं गच्छतीतिवेद्यम्। तथा स्मर्य्यते च "यथैकमाकाशगमर्क-विम्वम् क्षुद्रेषु पात्रेषु जलान्वितेषु भजत्यनेकप्रतिविम्बभावम्। तथा त्वमन्तःकरणेषु देव" इत्यादि। तथा श्रूयते च" तत्सृष्ट्वा तदेवानु-प्राविशत्" इति यथा एकस्मिन् घटे भग्ने सति तद्घटजलावच्छि-न्नमेवैकम् प्रतिविम्बम् विम्बत्वं लभते न चाभग्नसर्वघटजलावच्छिन्न-सर्व्वप्रतिविम्बानाम् बिम्बत्वं सम्पद्यते तथैव स्थूलसूक्ष्मशरीरावच्छि-न्नान्तःकरणरूपे एकस्मिन् कारणशरीरे तत्र प्रतिविम्बितविम्वप्रति-त्रिम्बरूपस्य जीवस्य संसारिणो विम्बरूपम् ब्रह्मत्वम् स्वरूप-

सम्पत्तिर्घटते । नान्येषाम् सर्व्वेषाम् सर्व्वस्थूलसूक्ष्मशरीरावच्छिन्नसर्व्वान्तःकरणावच्छिन्नानाम् तत्र तत्र प्रतिविम्बितप्रतिविम्बरूपजीवानाम्बिम्बरूपम् ब्रह्मत्वं स्वरूपसम्पत्तिर्घटते इतिवेदितव्यम् । तत्र यथा एकस्यैव सजलघटस्य भङ्गोदृश्यते तथा एकस्यैव सस्थूलससूक्ष्मशरोरकारणशरीरस्य अविद्यारूपस्य प्रणाश उपपद्यते। अनेनैव प्रकारेण अविद्यायाः सान्तत्वमुपपन्नम् भवतीतिवेदितव्यम्। यथाच भग्नस्य सजलघटस्य अन्तवत्त्वं अत्यन्तं दृश्यते। तथा अविद्याया अपि अन्तवत्त्वमत्यन्तमेवेति वेदितव्यम्। अत्राविद्याया अनेकजलान्वितघटसादृश्यदर्शनात् अविद्याया अनेकत्वं सम्भवति तच्च अजामेकामित्यादिवाक्यान्न सम्भवति । तत्रोच्यते यथा एक एवाकाशः तत्तद्घटावच्छिन्नत्वेन तत्तद्घटाकाशत्वरूपमनेकत्वम्भजति । तथात्राप्येकमेव जलतत्त्वम् तत्तद्घटावच्छिन्नत्वेन तत्तद्घटजलत्वरूपमनेकत्वम्भजति। तथैव च एकैवाविद्या समष्टिरूपा तत्तत्स्थूलसूक्ष्मोपाध्यवच्छिन्नत्वेन तत्तदुपहितान्तःकरणत्वरूपमनेकत्वम् व्यष्टित्वम् भजतीतिवेदितव्यम्। ततश्च न अविद्यैकत्वव्याहतिप्रसक्तिरिति वेदितव्यम् । एवमुक्तप्रकारेण अविद्यात्यन्तसान्तत्वविषयकपूर्व्वोक्तसृष्टिप्रलयरूपप्रवाहात्मकसंसारप्रणाशप्रसङ्गनिर्बन्धप्रसङ्गादिसकलदोषनिरास उपपन्न इतिवेदितव्यम्। "प्रकृतिःपुरुषस्येह" इत्यादिस्मृतावपि पुरुषस्येत्येकवचनप्रयोगात् व्यष्टिरूपिण्याएव अविद्याया भङ्गोनुमीयते ततश्चापि संसारलोपादिपूर्व्वोक्तदोषनिरासइत्यवगन्तव्यम् । सत्यपि प्रकृतिःविवेकिनः प्रकृतिपरिचयिनः पुरुषस्य समीपं नोपजाति पुरुषश्चविविक्तात्मस्वरूपः सतीमपि ताम्प्रकृतिमुपेक्ष्यत इति साङ्ख्यवित्समयः। तथाच प्रतिपाद्यते ईश्वरकृष्णेन कपिलानुयायिना "प्रकृतेःसुकुमारतरन्नकिंचिदस्तीति मे मतिर्भवति। या दृष्टास्मीति न पुनर्दर्शनमुपैति पुरुषस्य। दृष्टा मयेत्युपेक्षक एकोद्रष्टाहमित्युपरमत्यन्या। सति संयोगेपि तयोः प्रयोजनं नास्ति सर्गस्य" इत्यादिवाक्यैः। ततो वस्तुतोप्यर्थतश्च अविद्याया मुक्तिदशायामत्यन्तसान्तत्वमुपपद्यत एवेतिवेदितव्यम्। अत्र विचार्य्यते अविद्यास्वरूपम् एतन्निदानभूतम् क्लेशसन्तानस्य कर्म्माशयस्य च सविपाकस्येति। ततश्चामित्रावत्सपदवत् वस्तुसत्त्वं वेदितव्या यथा नामित्रोमित्राभावोनमित्रभावः किन्तु तद्विरुद्धःसम्पन्नः यथावा अवत्सपदम् न वत्सपदाभावो नवत्सपदभावः किन्तु स्थानं

ताभ्यामन्यत् वस्त्वन्तरम् अन्येपि अधनादिपदार्थादृष्टान्तावेदितव्याः एवमविद्या न प्रमाणम् न प्रमाणाभावः किन्तु विद्याविपरीतमज्ञानपदवाच्यज्ञानान्तरम् मिथ्या ज्ञानमितियावत् वेदितव्यम्। यथा च मृतमातृकोबालः आजन्मनः जातोपमातृगतमातृसंस्कारः उपमातरमेव मातरम्विजानाति तथा विस्मृतस्वरूपः पुरुषः आसृष्टेः संजातानात्मदेहाद्यहम्बुद्धिः देहाद्येव स्वरूपं विजानातीत्यर्थोवेदितव्यः। अविद्याव्याख्यानावसरगतप्रसंगप्राप्तास्मितादिक्लेशाः यथाक्रमम् व्याख्यायन्ते "तत्वम्पदार्थौ परमात्मजीवकावसीति चैकात्म्यमथानयोर्भवेत्"अत्रास्मृतौ परात्मजीवयोः असिशब्देन ऐकात्म्यं सूच्यते तथैव अहम्प्रत्ययार्थपुरुषबुद्धयोः द्रष्टृदृश्ययोः क्षेत्रज्ञक्षेत्रयोरितियावत्। ऐकात्म्यं तादात्म्यमिति यावत् प्रतीयते तद्भावः अस्मिता इतिद्वितीयःक्लेशः। रागस्यपातंजलयोगसूत्रव्यासभाष्ये तृष्णार्थकत्वाभ्युपगमात् तृष्णाशब्दस्य कामशब्दपर्य्यायत्वात् द्वेषस्य च तत्रैव भाष्ये क्रोधार्थत्वाभ्युपगमात् रागद्वेषशब्दाभ्यां कामक्रोधौ प्रतीयेते प्रसिद्धंच "काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" इति भगवद्वाक्यात् रागद्वेषयोः कामक्रोधरूपयोः क्लेशरूपत्वम् रागः कामोराजसः पुनःपुनःप्रपूर्य्यमाणोप्यपूर्य्यमाणः महाशनः तृतीयः क्लेशः। शत्रुः अहितकारी द्वेषः क्रोधः राजसः ब्रह्महत्यादिपापजनकः महापाप्मा शत्रुः अहितकारी चतुर्थक्लेशः वेदितव्यः। यद्वा पुरुषबुद्धयोः ऐकात्म्य प्रतीतिरस्मिता "दृग्दर्शनशक्त्योरेकात्मितैवास्मिता" इतिपातञ्जलयोगसूत्रात् अनुभूतसुखस्य सुखानुस्मृतिपूर्व्वकः सुखे तत्साधने वा यो लोभः तृष्णा रञ्जनात्मकचित्तवृत्तिविशेषः स राग इति तथाच पातञ्जलयोगसूत्रम् " सुखानुशयी रागः" इतिअनुभूतदुःखस्यदुःखानुस्मृतिपूर्व्वकः दुःखे तत्साधने वा जिघान्सा अमर्षः स द्वेषः "दुःखानुशयी द्वेषः" इति पातञ्जलयोगसूत्रात्। सर्व्वस्य प्राणिमात्रस्य अनुभूतमरणभावस्य "मा न भूवंहि भूयासम्" इत्यादिश्रुतिप्रतिपादितात्माशीर्भवति मरणकालिकपरमदुस्सहक्लेशानुभवभाविता तथैव पूर्व्वजन्मनिष्ठदुस्सहदुःखानुभवश्च प्रतीयते। कृमेरपि जातमात्रस्य शिशोरपि अनुत्पन्नबोधस्य च प्रत्यक्षानुमानागमादिप्रमाणसम्भावितम्मरणभयम् मरणवस्तुनः गतिक्रन्दनादि संसूचितं प्रागनुभूतम् मरणकालिकदुस्सहदुःखमनुमापयति स एव पूर्व्वानुभूतः क्लेशः विद्-

मानदशायामपि नैसर्गिकःस्वपूर्व्वस्थितिभावितः अभिनिविष्टो वर्त्तते अभिनिवेशः प्राणिमात्रमभिव्याप्य निवेशः प्रवेशः अभिसर्व्वतोभावेन वासितसूक्ष्मरूपेण निवेशःप्रवेशोवा स अभिनिवेशः अस्यास्तीतिअभिनिवेशः अर्शाद्यच् इतिपाणिनिः स अभिनिवेशाख्यः क्लेशः यथाचायम् विमूढेषु दृश्यते। तथा विवेकिष्वपि समाना हि तयोः कुशलाकुशलयोः मरणदुःखानुभवादियम्वासनेति "स्वरसवाही विदषोपि तथारूढोभिनिवेशः" इतिपातञ्जलयोगसूत्रात् ॥

एवमविद्यायाः देहाद्यहम्बुद्धित्वमनादित्वम् सान्तत्वम् निर्णीय सूत्रकारः पुनरपि तां वक्ष्यमाणविशेषणैः परिचाययति मुमुक्षूणाम्विवेकदाढ्र्याय पञ्चमसूत्रेण।

## सा हि कर्म्मानुगेश्वरानुशास्या प्रपञ्चोपादानस्वभावा १।१।५।

साशब्देन पूर्व्वनिर्द्दिष्टस्य चतुर्थसूत्रस्थस्य अविद्याशब्दस्य परामर्शः हीतिनिश्चयार्थे अव्ययपदम् सा अविद्या किम्विशेषणविशिष्टा कर्म्मानुगा कर्म्म पुण्यपापरूपम् तस्य अनुगा पश्चाद्गामिनी तमनुगच्छतीतिभावः जगद्वैचित्र्यसचिवपुण्यपापनिमित्तकसुखदःखफलप्रदात्रीतियावत्। ननु "वैषम्यनैर्घृण्येन सापेक्षत्वात् तथाहि दृश्यते" इतिब्रह्मसूत्रे ईश्वरस्य सुखदुःखाढ्याम् विषमांसृष्टिं निर्मिमाणस्य प्राकृतजनस्येव रागद्वेषोपपत्तौ वैषम्यनैर्घृण्ये प्रसज्येते इत्याक्षिप्य तद्वारणाय कर्म्मसापेक्षत्वमीश्वरस्य व्यवतिष्ठति पर्जन्यसादृश्यञ्च दर्शयति यथाहि ब्रीहियवादिसृष्टौ साधारणकारणं मेघः ब्रीहियवादिवैषम्ये तत्तद्बीजगतविशेषसामर्थ्यानि असाधारणकारणानि एवम् ईश्वरः देवमनुष्यादिसृष्टौ साधारणकारणम् देवमनुष्यादिवैषम्ये तत्तज्जीवगतविशेषकर्म्माणि असाधारणकारणानीति तथाच श्रुतिः"एष ह्येव साधु कर्म्म कारयति तं यमेभ्योलोकेभ्य उन्निनीषत एष एवासाधु कर्म्म कारयति तं यमेभ्योलोकेभ्योऽधोनिनीषते" इति "पुण्योवै पुण्येन कर्म्मणा भवति पापः पापेन" इतिच। तथाच स्मृतिः "ये यथा माम्प्रपद्यन्ते तांस्तथैव भजाम्यहम्"तत् कथमविद्यायाः कर्म्मसापेक्षत्वम् तत्रोच्यते "उपपद्यते चाप्युपलभ्यते च" इति ब्रह्मसूत्रीयभाष्येन न चाविद्या केवला वैषम्यस्य कारणम्

एकरूपत्वात् रागादिक्लेशवासनाक्षिप्तकर्म्मापेक्षा त्वविद्या वैषम्यकरी स्यात् इतिदृश्यते तेन ईश्वरस्यापि अविद्याया अपि कर्म्मसापेक्षत्वमुपपद्यते तत्र ईश्वरस्तु "निष्कलं निःक्रियंशान्तम्" इत्यादिश्रुतेः निःक्रियत्वेन प्रसिद्धः "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इत्यादिश्रुतेः जगज्जननादिहेतुरप्युच्यते तत्र परस्परधर्म्मविरोधः प्रसज्यते तत्रोच्यते ईश्वरः सर्व्वशक्तिमान् प्रतिपाद्यते शास्त्रे तस्यैका शक्तिर्विक्षेपशक्तिरितिकथ्यते स्मर्य्यते च "विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तञ्जगत्सृजेत्" इतिविक्षेपशक्तिरूपिण्या ईश्वरशक्त्या एव अविद्यापदवाच्यत्वम् तस्या एव-जगद्वैचित्र्यवैषम्यकर्त्तृत्वस्वीकृतत्वेन कर्म्मसापेक्षत्वमीश्वर उपचर्य्यते यद्वा शक्तिशक्तिमतोश्चन्द्रिकाचन्द्रयोरिवानन्यत्वाभ्युपगमात् एकत्र कर्म्मसापेक्षत्वमुभयत्र सम्बद्ध्यते तत उपपन्नमविद्यायाः कर्म्मानुगत्वम् व्याख्यानञ्चाप्यनवद्यम् । यद्वा अविद्यासहकारित्वेन ईश्वरस्य जगद्वैचित्र्यकर्त्तृत्वप्रसिद्धेः उपपन्नमेवाविद्यायाः कर्म्मानुगत्वमितिवेदितव्यम् । सा अविद्या पुनः किम्विशेषणविशिष्टा ईश्वरानुशास्या ईश्वरेण अनुशास्या अनुशासनरूपक्रियाविषयीभूता ईश्वरानुज्ञापनीया तत्प्रेर्य्या इतिवेदिव्यम् । "ईश्वरः सर्व्वभूतानां हृद्देशे ऽर्जुन तिष्ठति । भ्रामयन्सर्व्वभूतानि यन्त्रारूढ़ानि मायया" इतिस्मरणात् मायया इतिशब्देन अविद्यारूपिण्या मायाया ईश्वरप्रेर्य्यत्वमभ्यज्यते राजा दूतेन सन्देशङ्गमयति तत्र यथा दूतस्य राजप्रेर्य्यत्वन्तथा अविद्याया ईश्वरप्रेर्य्यत्वमितिवेद्यम् सा अविद्या पुनःकिम्विशेषणविशिष्टा प्रपञ्चोपादानस्वभावा प्रपञ्चस्य जगत्कार्य्यस्य उपादानस्वभावा कार्य्यमुपादीयते अनेनेति उपादानङ्कारणं तत्स्वरूपा इति वेदितव्यम् । ननु "यतोवा इमानि भूतानि जायन्ते" अत्रश्रुतौ यत इतिपञ्चमी प्रकृतौ द्रष्टव्या जनिकर्तुरितिसूत्रात् जायमानस्य कार्य्यस्य प्रकृतिरपादानसंज्ञिका भवतीतिसूत्रार्थः । अपादाने पंचमी इतिसूत्रात् प्रकृतौ पञ्चमीलाभः।ततः यतोवा इतिश्रुतिलक्षितस्य ब्रह्मणःजगतः प्रकृतत्वम् नाम उपादानकारणत्वम् सम्भवति तत्कथम् अविद्यायाः जगतः उपादानकारणत्वम्प्रतिज्ञातव्यम् ।तत्रोच्यतेब्रह्मणः जगदुपादानकारणत्वङ्किङ्कार्य्यसमसत्ताकम् किङ्कार्य्यविषमसत्ताकम् । नाद्यः कूटस्थस्यात्मनः ब्रह्मणः परिणामविकारप्रसङ्गात् । नद्वितीयःव्रीहियवादिकार्य्यस्य समसत्ताकस्यपृथिवीरूपोपादानकारणस्य प्रत्यक्षसिद्धस्य

विरोधप्रसङ्गात्। परन्तु श्रुतिस्मृतिप्रसिद्धयुक्तिसिद्धजगदुपादानकारणत्वमपि ब्रह्मणोभवितव्यमेव। परिणामविकारप्रत्यक्षविरोधदोषोपि परिहार्य्यएव तत्प्रकारःप्रदर्श्यते। यथाप्रत्यक्षं कार्य्यविषमसत्ताकं कारणम् रज्वादि सर्प्पादिरूपं कार्य्यं जनयति तथैव ब्रह्मापितद्रूपं अध्यस्तं जगज्जनयतीतिवेंदितव्यम्। यथा रज्वादिकारणंकार्यविषमसत्ताकमपि सर्प्पादिकार्यसृष्टौ न परिणमते प्रत्यक्षविरोधं न लभते तथा ब्रह्माप्यपरिणाम्येव प्रत्यक्षाविरुद्धम् कार्यविषमसत्ताकं कारणमितिवेद्यम्। तत्र यथा रज्वधिष्टानेदन्तारूपसत्तावद्रज्वज्ञानमपि सर्प्पाकारेण उपादानकारणत्वं लभते प्रतीयते च रज्वधिष्ठानं विवर्त्तोपादानत्वम् कार्य्यविषमसत्ताकत्वम् अपरिणामित्वम्प्रत्यक्षाविरोधं च लभते। तथैव ब्रह्माधिष्ठानेदन्ता रूपसत्तावती अविद्या जगदाकारेण उपादानकारणत्वंलभतेप्रतीयतेच ब्रह्माधिष्ठानं विवर्त्तोपादानत्वं कार्यबिषमसत्ताकत्वम् अपरिणामित्वम्प्रत्यक्षाविरोधं च लभत इतिवेद्यम्। तथाच जगत्कार्य्यस्य ब्रह्मविवर्त्तरूपोपादानकारणमितिवेदितव्यम् विवर्त्तोपादानतात्पर्य्यवत्येव "यतोवा इमानि भूतानि जायन्ते" इति श्रुतिर्वेदितव्या। "निःकलं निःक्रियम्" इत्यादिश्रुत्येकवाक्यत्वात् पूर्व्वोक्तप्रकारस्वारस्याच्च। अविद्याच जगत्कार्य्यस्य उपादानकारणमित्यपि वेदितव्यम। पूर्व्वोक्तप्रकारानुरोधात् ब्रह्माधिष्ठानेदन्तारूपसत्तावदज्ञानम् जगदाकारेण प्रतीयते उपादानकारणत्वं लभते यद्यपि अध्यासः मिथ्याज्ञानरूपः अतद्रूपप्रतिष्ठः भूतार्थविषयप्रमाणवाधः प्रत्यक्षविरुद्धः। तथापि अबाधितदशायां प्रत्यक्षवत्प्रतीयमानः असत्प्रत्यक्षोपि प्रत्यक्ष एवेतिवद्यम्। न च कश्चित् निर्मीलितनयनः शुक्तिकारजतम् रज्जुसर्प्पम् स्थाणुपुरूषम्वा पश्यति तस्मात्सिद्धम् कार्यविषमसत्ताकरज्जुवत् ब्रह्मापि प्रमाणसिद्धमुपादानकारणमितिवेद्यम् 'प्रकृतिर्ह्यस्योपादानम्" ':अज्ञानमेवास्य हि मूलकारणम्' अज्ञानतो ऽध्यासवशात् प्रतीयते" इत्यादिस्मरणात्। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेयनाय'' अत्र श्रुतौ ज्ञानेन संसारप्रणाशोऽभ्यज्यते। ततः संसारस्य अज्ञानरूपं कल्पनीयम् प्रकाशनाश्यायास्तमिस्रायाः तमोरूपत्वात् यथा प्रकाशतमसोः परस्परम् विरोधोदृश्यते तथैव ज्ञानाज्ञानयोरपि परस्पर म्विरोधोवेदितव्यः। यथा तमिस्रायाः तम उपादानत्वं दृश्यते। तथैव संसारस्यापि अज्ञानोपादानत्वमुपपन्नमितिवेदितव्यम्। एवं सूत्रकारः

विशेषणत्रयेण अविद्यास्वरूपमुपदिश्य अविद्याः स्वरूपविचार अविद्यायाःप्रपञ्चोपादानत्वस्वभावश्रवणेन कथं श्रुतिस्मृतिप्रसिद्धम्ब्रह्मणः जगदुपादानकारणत्वम् निषिध्यत इतिशङ्कोदयः अधिकारिणां मा भूयादित्याशयेन श्रीमान् सूत्रकारः षष्ठं सूत्रमविद्यापरिचायकम् सूत्रयति ॥

## ब्रह्मण्यधिष्ठिता ॥ १।१।६।

सा जगदुपानभूता अविद्या अधिष्ठाने सकलप्राकृतवस्तुसमाश्रयीभूते ब्रह्मणि अधिष्ठिता समाश्रिता इतिवेदितव्यम्। प्रकृतिरेवाविद्यापदवाच्या प्राकृतवस्त्वाकारेण प्रतीयमाना प्राकृतवस्तूपादानीभूता अधिष्ठानब्रह्मेदन्तारूपसत्तया प्रतीयमाना अधिष्ठाने ब्रह्मण्येवावतिष्ठत इतिवेदितव्यम्। एतञ्च तृतीयसूत्रीयाविद्यापदव्याख्यानावसरे अध्यासस्वरूपप्रदर्शने अविद्यायाः शुद्धचैतन्ये अहम्प्रत्ययार्थभूते ब्रह्मण्यधिष्ठितत्वम् विस्तरेण प्रतिपादितमित्यत्र संक्षेपेणैवप्रदर्शितमितिवेदितव्यम्। एतनैव ब्रह्मणः जगत्कार्य्यम्प्रति विवर्त्तोपादानत्वमविद्यायाः उपादानत्वञ्च प्रदर्शितमितिवेदितव्यम्। एतच्चापि विवर्त्तोपादानत्वमुपादानत्वञ्च ब्रह्मणः अविद्यायाश्च रज्जुरज्ज्वज्ञानसादृश्येन पञ्चमसूत्रीयभाष्ये प्रतिपादितमेवात्र समासेनैव प्रतिपाद्यते रज्ज्वधिष्ठाने विवर्त्तोपादाने अधिष्ठितेनरज्ज्वज्ञानेन उपादानकारणेन सर्प्पकार्य्यं यथा प्रतीयते तथैव ब्रह्माधिष्ठाने विवर्त्तोपादाने अधिष्ठितेन ब्रह्माज्ञानेन अविद्यारूपेण उपादानकारणेन जगत्कार्य्यम्प्रतीयत इतिवेदितव्यम्। यथा रज्जौ अज्ञानकल्पितसर्प्पस्य प्रतीतिमात्रम् न वस्तुसत्त्वम् किन्तु मिथ्यात्वमेव तथैव ब्रह्मणि अविद्याकल्पितप्रपञ्चस्य प्रतीतिमात्रम् न वस्तुसत्त्वम् किन्तु मिथ्यात्वमेवेतिवेदितव्यम्। 'आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः स्वकीयार्थेषु वर्त्तन्ते सूर्य्यालोकं यथा जनाः" इतिस्मृत्यैषाम् स्थूलसूक्ष्मकारणशरीररूपाणाम् देहेन्द्रियमनोधियाम् चैतन्याश्रयत्वम्प्रतिपाद्यते। तेन च "सा कारणशरीरं स्यात्" इत्याद्युक्त्या कारणशरीररूपाया अविद्याया अपि चैतन्याश्रितत्वम् तेन च तस्याः प्रत्यगभिन्नब्रह्मचैतन्याश्रितत्वम् ब्रह्मण्यधिष्ठितत्वम् सिद्धमेवेतिवेदितव्यम्। अविद्यैव व्यष्टिरूपा धीशब्दपर्य्यायबुद्धिपदवाच्या समष्टिरूपा महत्पदवाच्येतिवेदान्तसम्प्रदायाद्वेदितव्यम्। सूच्यते पि महतः जगदुपादानीभूतत्वात् अवि-

द्यात्वम् "मम योनिर्महद् ब्रह्मतस्मिन् गर्भं दधाम्यहम्" इतिस्मृतयोनिशब्दप्रयोगात् महतः उपादानत्वम् व्यज्यते योनिशब्दश्च प्रकृतिवचनः समधिगतोलोके पृथिवी योनिरोषधिवनस्पतीनामिति स्त्रीयोनिरप्यस्त्येवावयवद्वारेण गर्भम्प्रत्युपादानकारणम् क्वचित् स्थानवाचकोपि योनिशब्दः श्रूयते "योनिष्ठ इन्द्र अकारि" इत्यादिश्रुतौ तत्र प्रकृतिवचनता भवतु मावा भवतु अत्रतु गर्भं दधाम्यहमितिप्रयोगात् उपादानत्वंयुक्तमेव अत्र महद्विशेषणब्रह्मशब्दस्य व्यापनशीलत्वम् समष्टित्वमितिवेदितव्यम्। यद्यपि "अनाद्यविद्योद्भवबुद्धिविम्बितोजीवः प्रकाशोयमितीर्य्यते चितः" इत्यादिस्मृतौ बुद्धेः अविद्योद्भवत्वस्मरणात् न अविद्यारूपत्वम् तथाप्यत्रैव श्रुतौ बुद्धौ जीवस्य प्रतिबिम्बितत्वमपि श्रूयते तत्र प्रकारः अविद्या एव जीवरूपप्रतिविम्बाधारत्वेन श्रुतिस्मृतिभ्यामभ्युपगम्यते ततः अविद्यायाः अवस्थाविवेचनायाम् अविद्याबुद्धिरूपेण द्वैविध्यं कल्पनीयम् स्वरूपविवेचनायान्तु ऐक्यमेवेतिवेदितव्यम्। एकस्यैव देवदत्तस्य यथा अवस्थाभेदेन अध्येतृत्वाध्यापकत्वरूपेण द्वैविध्यम्स्वरूपेण ऐक्यमिति "बुद्ध्यवच्छिन्नचैतन्यमेकम्पूर्णमथापरम्" इत्यादिस्मृतेरपिबुद्धेःकारणशरीत्वम्व्यज्यते ततश्च अविद्यात्वमपि व्यज्यते ततश्च बुद्ध्याश्रयत्वेन प्रतिपादितम् चैतन्यम् ब्रह्मात्मकम् अविद्याश्रयमित्युपपन्नम् भवति। ततश्च अविद्यायाः ब्रह्मण्यधिष्ठितत्वम् सिद्धमितिवेदितव्यम्। १। १। ६॥ इति परमपूज्यपादश्रीमद्योगदत्तशर्म्मकृतामृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्म्मशिष्यश्रीमत्सत्यनारायणशर्म्मकृतभाष्ये प्रथमाध्यायस्य प्रथमः पादः। समाप्तः॥

सूत्रकारः प्रथमाध्यायस्थप्रथमपादस्थचतुर्थसूत्रस्थदेहं जीवोपाधिभूतं कारागृहोपमम् कर्म्मनिबन्धनम् शरीरपदवाच्यं शीर्य्यत इतिव्युत्पत्त्या शीर्णत्वविशिष्टम् करिकलभकर्णाग्रचपलम् प्रकारसंख्यया परिचाययति॥

## स्थूलसूक्ष्मकारणभेदात्त्रिविधोदेहः॥ १।२।१

स्थूलसूक्ष्मकारणभेदात् इन्द्रियगोचरत्वम् स्थूलत्वम्। इन्द्रियागोचरत्वम् सूक्ष्मत्वम्। सेन्द्रियागोचरत्वस्थूलसूक्ष्महेतुत्वम् कारणत्वम्। अस्मात् स्थूलत्वविशिष्टसूक्ष्मत्वविशिष्टकारणत्वविशिष्टप्रकारतृतयाद्धेतोः त्रिविधः तिस्रोविधाः प्रकाराः यस्येतित्रिविधः त्रिप्रकारः देहः

शरीरमितिवेदितव्यम्। तत्र सौक्ष्म्यात् इन्द्रियागोचरत्वेन अनुपलब्धौ सत्याम् अननुभूतसप्तमरससादृश्येन सूक्ष्मशरीरस्य अभावः शङ्कनीयो-भवति तत्रोच्यते यत्र स्वप्नदशायाम् स्थूलदेहोनिवृ र्त्तिकस्तिष्ठति इन्द्रियवृत्तिराहित्यात् तत्रापि स्वाप्नवृत्तिर्दृश्यते यत्र यतश्च लोका-न्तरेऽलोकान्तराच्च स्थूलदेहस्य गत्यागती न सम्भवतः तत्र तत-श्चापि गत्यागती श्रूयेते "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रम-समेव ते सर्व्वे गच्छन्ति" इयङ्गतिश्रुतिः 'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्म्मणः" इत्यागतिश्रुतिः अस्मात् स्थूलदेहात् उत्क्रान्तिरपि श्रूयते "स यदास्मात् शरीरादुत्क्रामति सहैवैतैः सर्व्वैरुत्क्रामति" ननु उत्क्रान्तिगत्यागतीनां श्रवणात् जीव उत्क्रामति गच्छति आगच्छति इतिकल्पनीयम् उत्क्रान्तिगत्यागतिक्रियाकर्त्तृत्वेन तत्तल्लोकफलभो-क्तृत्वेन च जीवस्यैव स्वीकृतत्वादितिचेन्न न विभोरात्मनश्चलनमव-कल्पते "आकाशवत्सर्व्वगतश्च नित्यः" इत्यादिश्रुत्या अस्त्येव सि-द्धम्वैभवन्तस्य ततः परिच्छिन्नस्यैव जीवस्य घटाकाशस्येव चलन-मवकल्पते। सति च परिच्छेदे स एव परिच्छेदः सूक्ष्मदेह इतिवेदित-व्यम्।"अथैनमेते प्राणा अभिसमायन्ति" "स एतास्तेजोमात्राः सम-भ्याददानः" इत्यादिश्रुतिभिः सूक्ष्मदेहस्य प्राणेन्द्रियान्तःकरणसमुदा-यरूपस्य परिच्छेदत्वं सम्भवति उक्तश्रुतौ प्राणशब्दप्रयोगात् सूक्ष्म-देहोपगतप्राणोपलब्धेः समनन्तरश्रुतौ तेजोमात्राशब्दश्रवणात् सूक्ष्म-देहगतचक्षुराद्युपलब्धेरुक्तिसिद्धिर्वेदितव्या। ततश्च सूक्ष्मदेहस्य इन्द्रि-यागोचरत्वं अनुपलब्धिरितियावत् नाभावनिबन्धनम् किन्तु सौक्ष्म्य-निबन्धनमेवेतिवेदितव्यम् "अतिदूरात् सामीप्यात् इन्द्रियघातान्म-नोनवस्थानात् सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च" इत्युक्तौ एतैर्हेतुभिरनुपलब्धिर्भवतीतिप्रतिपाद्यते। ततोपि सौक्ष्म्याद-नुपलब्धिर्भवतीतिसिद्धमितिवेदितव्यम्। पुनरपिस्मर्य्यते "सौक्ष्म्या-दनुपलब्धिर्नाभावात् कार्य्यतस्तदुपलब्धेः" इति। ततोपि उक्तसिद्धिः परिपुष्टेतिवेदितव्यम्। कारणत्वम् स्थूलसूक्ष्महेतुत्वेन प्रतिपादितम् तत्र कारणस्य इन्द्रियागोचरत्वे सति केन प्रमाणेन तदुभयहेतुत्वम-भ्युपगम्यं स्यात् तत्रोच्यते "बीजान्यान्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथाक्लेशैर्नात्मा सम्पद्यते पुनः" अत्र स्मृतौ अग्नि-दग्धबीजसादृश्यात् क्लेशानान्तेषामपि बीजभावोभ्युपगम्यः अविद्या याश्च क्लेशत्वम्प्रसिद्धमेव तथा च कारणत्वमपि ततः कारणम्बीज-

रूपमिति सिद्धम् वेदितव्यम् । यथा बीजादङ्कुरःप्ररोहति तथैव कारणात् स्थूलसूक्ष्मौ प्ररोहत इति वेदितव्यम् । यद्यप्युक्तश्रुतौ क्लेशैः सह आत्मनः सम्पत्तिर्व्यज्यते न च ततः स्थूलसूक्ष्मप्ररोहो व्यज्यते तथापि निरवयवस्यात्मनः तत्सम्पदायोगात् स्थूलसूक्ष्मपरिच्छिन्नस्यैव आत्मनः तत्सम्पत्तिः सम्भवति तथा च युक्तम् कारणत्वम् स्थूलसूक्ष्मकारणत्वमिति वेदितव्यम् । "तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया । वियत्पवनतेजोऽम्बुभुवोभूतानि यज्ञिरे" इत्याद्युक्तेरपि तमःप्रधानप्रकृतेर्मलिनसत्त्वप्रधानाया अविद्यारूपकारणस्येति यावत् स्थूलमूक्ष्महेतुत्वम्प्रतिपाद्यते "मायामयं स्थूलमुपाधिमात्मनः" इत्यादिस्मृतिरपि उक्तसिद्धिम्पोषयतीति वेदितव्यम् ॥

एवं सूत्रकृता देहत्रैविध्यम्प्रतिपाद्य प्रत्येको देहः परिचीयते अग्रिमसूत्रेण

## आप्रारब्धस्थायी स्थूलः सूक्ष्मस्तु प्रलयावधिः आमुक्तेः कारणम् १।२।२।

स्थूलः बृहत्परिमाणः देहः किं लक्षणः आप्रारब्धस्थायी प्रारब्धपर्य्यन्तं स्थितिशीलः प्रारब्धकर्म्मभोगपर्य्यन्तं तिष्ठति तदन्ते नश्यतीत्यर्थः इदन्तु स्थूलदेहस्य तटस्थलक्षणमुक्तम् पूज्यपादसूत्रकारेण "रसादिपञ्चीकृतभूतसम्भवम् भोगालयं दुःखसुखादिकर्म्मणाम् । शरीरमाद्यन्तवदादिकर्म्मजम् मायामयं स्थूलमुपाधिमात्मनः" इत्यादिस्मृतिः स्थूलदेहस्य स्वरूपलक्षणं स्मारयतीति वेदितव्यम् । अत्रस्मृतौ रसादीति रसः रागः अभिलाषः कामः आदिः उत्पत्तिहेतुर्यस्येति तथाभूतम् यद्वा रसो धातुविशेषः आदिः उत्पत्तिहेतुर्यस्येति रसशब्दः " रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः " इतिस्मृतिलक्षितः सर्व्वधातूपलक्षक इतिवेदितव्यम् । अविशेषाणाम् शब्दस्पर्शरूपरसगन्धतन्मात्राणाम्विशेषाः आकाशवाय्वग्न्युदकभूमयो भूतानि अपञ्चीकृतानि पञ्चीकृतानि सम्पाद्यन्ते तेभ्यः पञ्चीकृतभूतेभ्यः सम्भवः समुत्पत्तिर्यस्येति पञ्चीकृतभूतसम्भवम् पञ्चीकरणप्रकारः प्रदर्श्यते आकाशादिप्रत्येकम्भागद्वयोपेतम् कृत्वा पुनश्च प्रथमम्प्रथमम्भागम्भागचतुष्टयोपेतम् विधाय स्वस्मात् स्वस्मात् इतरेषाम् चतुर्णाम् चतुर्णाम् यो यो द्वितीयः स्थूलो भागस्तेन

तेन सह प्रथमप्रथमभागांशानाम् चतुर्णाञ्चतुर्णाम्मध्ये एकैकस्य योजनात् ते वियदादयः पञ्चपञ्चात्मका भवन्ति इति यथाच स्मर्य्यते "द्विधा विधाय चैकैकं चतुर्धा प्रथमम्पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते "इति अस्याः स्मृतेः भोगालयमित्यादिपदानि सुगमत्वात् न व्याख्यातानीति वेदितव्यम्। अस्मिन् स्थूलदेहे वर्त्तमानम् व्यष्टिचैतन्यम् विश्वाख्यम्भवति समष्टिचैतन्यम् वैश्वानराख्यञ्चेति वेदितव्यम्। स्थूलदेहस्य वृत्तिमती अवस्थितिः जाग्रत्पदवाच्या भवति। यत्रेन्द्रियैर्विषयोपलब्धिर्भवतीति वेदितव्यम्। स्थूलदेह एव अन्नमयकोशपदवाच्यो भवतीति वेद्यम्। सूक्ष्मस्तु प्रलयावधिः सूक्ष्मः सूक्ष्मदेहः अणुपरिमाणः तु शब्दः स्थूलदेहात् सूक्ष्मदेहं व्यावर्त्तयति। स्थूलदेहात् सूक्ष्मदेहस्य वैलक्षण्यं द्योतयतीत्यर्थः। किंलक्षणः प्रलयावधिः प्रलयः कल्पान्तः अवधिः अवसानभूमिः सीमा यस्येति स तथाभूतः स्थितिकाले तिष्ठति प्रलयकाले नश्यतीत्यर्थः। इदन्तु तटस्थलक्षणम् सूक्ष्मदेहस्य पूज्यपादसूत्रकारेण प्रतिपादितम् स्वरूपलक्षणन्तु वक्ष्यमाणस्मृत्या प्रतिपाद्यते "सूक्ष्मम्मनोबुद्धिदशेन्द्रियैर्युतम् प्राणैरपञ्चीकृतभूतसम्भवम्। भोक्तुः सुखादेरनुसाधनम् भवेच्छरीरमन्यद्विदुरात्मनोबुधाः"इति अत्रस्मृतौ सूक्ष्मशरीरम् अपञ्चीकृतभूतसम्भवम् कथ्यते तत्प्रकारः प्रदर्श्यते तमःप्रधानप्रकृतिजानामपञ्चीकृतानाम्वियदादीनाम्भूतानाम्पञ्चभिः सत्त्वगुणभागैरुपादानभूतैः श्रोत्रत्वगक्षिरसनाघ्राणाख्यम् ज्ञानेन्द्रियपञ्चकम् क्रमादुपजायते एकैकभूतसत्त्वांशादेकैकमिन्द्रियम् यथाक्रमम् जायतइत्यर्थः तैः सत्त्वांशैः सर्वैः सम्भूय वर्त्तमानैः अन्तःकरणम् मनो बुद्धिरुपादानभूतम द्रव्यमुपजायते तदन्तः करणम् विमर्शाध्यवसायभेदात् मनोबुद्धिरूपाभ्यां द्विप्रकारम्भवति। तेषाम्वियदादीनामेव पञ्चभीरजोभागैस्तदुपादानभूतैर्वाक्पाणिपादपायूपस्थाभिधानानि कर्म्मेन्द्रियाणि क्रियाजनकानीन्द्रियाणि क्रमादुपजायन्ते एकैकभूतरजोंशादेकैकमिन्द्रियं यथाक्रमं जायत इत्यर्थः। तैः रजोंशैः सर्वैः सम्भूयवर्त्तमानैः प्राणोजायते स प्राणः प्राणनादिव्यापारभेदात् प्राणापानसमानोदानव्यानरूपेभ्यः पञ्चधाभवति। ज्ञानेन्द्रियकर्म्मेन्द्रियप्राणपञ्चकैर्मनसा बुद्ध्या सह सप्तदशभिः सूक्ष्मं शरीरम्भवति तदेव लिङ्गमप्युच्यते सूक्ष्मशरीरस्य अपञ्चीकृतभूतसम्भवत्वप्रदर्शनेनैव सूक्ष्म शरीरगतसप्तदशपदार्था अपि व्याख्याता इतिवेदितव्यम्। भोक्तुर्जी-

वस्य सुखादेः सुखदुःखरूपभोगस्य अनुसाधनम् अत्र लोके तेनैव भोगानुभवात् "चक्षुषा पश्यति मनसा पश्यति" इत्यादिश्रुतिभिः लोकान्तरे च सूक्ष्मशरीरेणैव गमनसम्भवात्। तत्रापि तेनैव भोगानुभवात् इत्यर्थः। अस्मिन् सूक्ष्मदेहे वर्त्तमानम् समष्टिचैतन्यम् हिरण्यगर्भाख्यम्भवति व्यष्टिचैतन्यम् तैजसाख्यञ्च सूक्ष्मदेहस्य-वृत्तिमती अवस्थितिः स्वप्नपदवाच्या जागरितसंस्कारजन्यप्रत्यय-विषयणीभवति यद्यपि जाग्रत्यपि सूक्ष्मदेहस्य वृत्तिर्भवति। परन्तु स्थूलदेहापेक्षैव भवति। स्वप्ने स्थूलदेहनिर्पेक्षेति वेदितव्यम्। सूक्ष्म-देहे एव प्राणमयमनोमयविज्ञानमयकोशाः अन्तर्भवन्ति इति वेदितव्यम्। स्थूलसूक्ष्मदेहगतभूतेन्द्रियान्तःकरणप्राणाः यथाक्रमम्परिचीयन्ते शब्दगुणवानाकाशः। स्पर्शगुणवान् वायुः परान्वयात् शब्द-गुणवाँश्च। रूपगुणवानग्निः परान्वयात् शब्दस्पर्शगुणवाँश्च। रस-गुणवज्जलम् परान्वयात् शब्दस्पर्शरूपगुणवच्च। गन्धगुणवती पृथ्वी परान्वयात् शब्दस्पर्शरूपरसवती च। श्रोत्रत्वगक्षिरसनाघ्राणा-ख्यानि ज्ञानेन्द्रियाणि यथाक्रमम् शब्दस्पर्शरूपरसगन्धविषयाणि दिग्वायुसूर्य्यवरुणाश्विदैवतानि वेदितव्यानि। वाक्पाणिपादपायूप-स्थाभिधानानि कर्मेन्द्रियाणि यथाक्रमम् वचनादानगमनविसर्गा-नन्दवृत्तीनि वह्नीन्द्रोपेन्द्रमृत्युप्रजापतिदैवतानि वेदितव्यानि। अन्तः करणम्मनोबुद्धिभेदात् द्विविधम् मनोविमर्शात्मकम् चन्द्रदैवतम्बु-द्धिरध्यवसायात्मिका ब्रह्मदैवतेति वेदितव्यम्। अन्तःकरणम्मनो-बुद्धिचित्ताहङ्कारभेदात् चतुर्व्विधमपि स्वीकृतम्। तत्र अहङ्कारो-भिमानात्मको रुद्रदैवतः चित्तञ्चेतःस्वरूपम् क्षेत्रज्ञदैवतमिति वेदितव्यम्। प्राणः प्राणापानसमानोदानव्यानभेदात् पञ्चविधः प्राणादिस्थितिप्रदेशास्तद्व्यापाराश्च यथाक्रमं स्मर्य्यन्ते वक्ष्यमाण-स्मृतिभ्याम् "हृदिप्राणो गुदेऽपानः समानो नाभिमण्डले। उदानः कण्ठदेशे स्यात् व्यानः सर्व्वशरीरगः" "अन्नप्रवेशनम्मूत्राद्युत्स-र्गोऽन्नादिपाचनम्। भाषणादिनिमेषाश्च तद्व्यापाराः क्रमादमी" इति आमुक्तेः कारणम् आमुक्तेः मुक्तिपर्य्यन्तम् कारणम् कारण शरीरम् अविद्यारूपं तिष्ठतीति योजनीयम्। यावत्सृष्टि प्रलयप्रवाहरूपप्रपंचम् तिष्ठति तदूर्ध्वं सति पुण्यपुञ्जोदये मोह रात्रिव्यतीतौ बुद्धिप्रबोधचन्द्रान्शावुदिते निरवधिसुखनीरधिस्वा त्मसम्पत्तौ सत्याम् सत्यांच मुक्तिनिष्पत्तौ नश्यतीत्यर्थः। अत्र

शंकनीयम्भवति सुषुप्तावपि सूक्ष्मशरीरवृत्त्युपरतिदर्शनात् "तद्यत्रै-तत्सुप्तःसमस्तःसम्प्रसन्नः स्वप्नन्न विजानाति तदा आसु नाड़ीषु सुप्तो भवति प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्"इत्या-दिश्रवणाच्च सुक्ष्मस्तु प्रलयावधिरित्यत्रसूक्ष्मस्तुसुषुप्त्यवधिरित्येव कथन्न स्यात्। तत्रोच्यते सुषुप्तिदशायाम् सूक्ष्मशरीरवृत्त्युप-रतिरेव दृश्यते न च तस्य विनाशः सम्भवति सुषुप्तिस्थानात् आत्मनः पुनस्तस्य च सूक्ष्मशरीरस्य उत्थानश्रवणात्। तथा च श्रूयते "कुत एतदागात्"एतत्प्रतिवचनावसरे "यथाग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्व्वे प्राणाः" इत्यादि "सत आगम्य न विदुः सत आगच्छामहे"इति च। यथा भूपतेः स्वावेक्षणीयकार्य्यविक्षणसमये सर्व्वाः प्रकृतयः कृतसन्निधानाः स्वस्वकार्य्यसम्पादिका भवन्ति तस्य च अन्तःपुरि शयनावसरे निवृत्तिकास्तिष्ठन्ति काचित्प्रधानाप्रकृतिः भूपतिसन्निहिता तिष्ठति पुनरपि जाग्रत्यस्मिन् सर्व्वास्तास्तथाभूताः भवन्ति एवमप्यात्मनि द्रष्टरि दृश्यकार्यसम्पृक्ते सति सूक्ष्मशरी-रीभूताः देहेन्द्रियादयः सवृत्तिकः। भवन्ति अस्मिन् सुषुप्ते सति नि-वृत्तिका भवन्ति प्रकृतिश्च प्रधानभूता तत्सन्निहिता तिष्ठति इति वेदितव्यम्। तस्मादुपपन्नम् सूक्ष्मशरीरस्य प्रलयावधित्वम् न सुषु-प्त्यवधित्वमिति। उक्तमपि वाचस्पतिमिश्रैः लयङ्गच्छतीति लिङ्गम् हेतुत्वेन चास्यलिङ्गत्वमिति भावः। सूक्ष्मशब्दस्यैव लिङ्गशब्दःपर्याय इति वेदितव्यम्। तस्मादपि सूक्ष्मस्य प्रलयावधित्वमुपपन्नमिति वे-दितव्यम्। भवति च पुनः शंकोत्थानम् जीवस्य स्वप्नजागरितयोस्तु उपाधिसम्पर्कवशात् पररूपापत्तिमिवापेक्ष्य तदुपशमात् "सता सौम्य तदा सम्पन्नो भवति" इतिश्रुतेः सुषुप्तौ स्वरूपापत्तिर्विवक्ष्यते तत-श्च सुषुप्तिमुक्त्योः सादृश्यात् आमुक्तेः कारणमित्यत्र आसुषुप्तेः कारणमिति कथन्न। तत्रोच्यते यद्यपि सुषुप्तौ जीवस्य स्वरूपसम्पत्ति-र्दृश्यते तथापि "सर्व्वे पाप्मानोतो निवर्त्तन्ते अपहतपाप्मा ह्येष ब्रह्म-लोकः" इत्यादिश्रुत्या ब्रह्मसम्पत्तिः पाप्मस्पर्शाभावे हेतुः समधिगतः उपपद्यते च सुषुप्तौ पाप्मस्पर्शः पुनः संसृतौ प्रत्यावर्त्तनदर्शनात् सोहमस्मि इति सौषुप्त्यचैतन्यस्य आत्माद्यस्मरणमात्मोत्थानमन्तरा नावकल्पते शब्देभ्यश्चापि तस्योत्थानमवगम्यते तथाहि "पुनः प्रति न्यायम्प्रतियोन्या द्रवति बुद्धान्तायैव इमाः सर्व्वाः प्रजाः अहरह-र्गच्छन्त्य एतम्ब्रह्मलोकन्न विदन्ति त इह व्याघ्रोवासिंहो वा वृको

वा वराहो वा कीटो वा पतङ्गो दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवति ” इत्यादि श्रुतिभ्यः सुषुप्तौ च नितराङ्कारणासत्त्वम् नावकल्पते यतः सुषुप्तकालीनोपाधिरेव कारणशब्देनाधिगम्यते ‘साकारणशरीरं स्यात् प्राज्ञस्तत्राभिमानवान् ’ इत्याद्युक्तेः सुषुप्तौ स्वरूपसम्पत्तिकालीनमज्ञानरूपमेवकारणसत्त्वम् श्रूयते “सुखमहमस्वाप्सन्न किञ्चिदवेदिषम् ” इत्यादिश्रुत्या यथाग्नेर्दहनप्रकाशनसम्पन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोभवतः यथा वा भस्मनाछन्नस्य तस्य। एवम् स्वरूपसम्पन्नस्यापि सच्चिदानन्दस्यात्मनःतत्र कारणरूपाविद्याग्रस्तत्वात् सत्यपि स्वस्मिन् निरवधिसुखनीरधौ निमग्ने ज्ञानैश्वर्यतिरोभाव उपपन्न इति वेदितव्यम् । तथा चोपपन्नमेवामुक्तेः कारणमिति अनुपपन्नञ्चासुषुप्तेः कारणमिति वेदितव्यम्। १।२।२

प्रथमाध्यायस्थ प्रथमपादस्थचतुर्थ सूत्रीयकर्म्मशब्दमनुसन्दधानः श्रीमान्सूत्रकारः संख्याविशेषणेन तद्विशिनष्टि।

## प्रारब्धसञ्चितक्रियमाणभेदात्

## त्रिविध कर्म्म १।२।३

प्राणिजन्माव्यवहिताद्यक्षणे ईश्वरानुमत्या संचितकर्म्मणः कश्चिदंशः कालवेगद्दतः आभोगायतनस्थूलशरीरस्थायी अवश्यम्भाविभोगः प्रारभ्यते स एव प्रारब्धं कर्म्म व्यपदिश्यत इति वेदितव्यम्। अनादिजगत्प्रवाहप्रवाह्यमाणस्य प्राणिनः अशेषजन्मक्रियमाणकर्म्मनिष्पन्नम् पौनःपुन्येन भोगप्रदम् प्रारब्धजनकम् ज्ञानाग्निदाह्यम् कर्म्म संचितरव्यपदिश्यते। जन्मारभ्य मरणपर्य्यन्तम् सम्पद्यमानमैहिकामुष्मिकभोगप्रदम् संचितप्रारब्धजनकम् ज्ञानाग्निदाह्यम् कर्म्म क्रियमाणव्यपदिश्यते अस्मात् प्रारब्धसंचितक्रियमाणाख्यकर्म्मत्रितयरूपभेदात् त्रिविधम् तिस्रो विधाः प्रकारा यस्येति त्रिविधङ्कर्म्म पुण्यपापरूपाकृतिरिति वेदितव्यम्।१।२।३॥

एवं सूत्रकारः कर्म्मत्रैविध्यम्प्रतिपाद्य प्रत्येकम्विशिनष्टि।



## पूर्व्वशरीरसम्पादितम्विद्यमानशरीरोपभोग्यम्प्रारब्धम् १।२।४॥

• पूर्व्वशरीरैः प्राक्तनदेहैः सम्पादितं समर्ज्जितं यत् तत्तथारूपम् विद्यमानशरीरासमर्ज्जितमिति योजनीयम् । विद्यमानशरीरेण वर्त्तमानदेहेन उपभोग्यमुपभोगयोग्यमिति वेदितव्यम् । अत्राविद्यमानशरीरानुपभोग्यमिति योजनीयम्।कुलालचक्रवत्प्रवृत्तवेगम् अप्रतिबद्धम् प्रतिपालनीयवेगक्षयम् अवश्यभोक्तव्यम् ज्ञानाक्षय्यम् कर्म्म प्रारब्धव्यपदिश्यते। ननुप्रारब्धकर्म्मणः अवश्यभोक्तव्यतायां सत्याम् "क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुतेः 'ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात्कुरुतेऽर्जुन" इत्यादिस्मृतेश्च अप्रामाण्यङ्कथन्न स्यात्।तत्रोच्यते ज्ञाननिमित्तःसुकृतदुःकृतरूपकर्म्मक्षयोऽवधारितः तत्राप्रवृत्तफले एव जन्मान्तरसञ्चिते अस्मिन् जन्मनि च प्राज्ज्ञानोत्पत्तेः क्रियमाणे सुकृतदुःकृते ज्ञानात् क्षीयेते न त्वारब्धकर्म्मणी सुकृतदुःकृते अर्धभुक्तफले याभ्यामेतद्भोगायतनम् शरीरन्निर्म्मितम् कुतस्त्वेष निश्चयः। "तस्य तावदेवचिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इतिश्रुतेः शरीरभङ्गावधित्वात् मुक्तिप्राप्तेः प्रारब्धाद्यावन्न विमुच्यते तावानेव विलम्बः। तन्मुक्तौ स्वरूपसम्पत्तिर्ब्रह्मप्राप्तिर्भवतीत्यर्थः अन्यथा हि ज्ञानात् सप्रारब्धसञ्चितक्रियमाणक्षये सति स्थितिकारणासत्वात् ज्ञानाधिगमाव्यवहितक्षण एव मुक्तिमश्नुवीत तदा शरीरभङ्गप्रतीक्षाम् नाचक्षीत। ननु वस्तुना यथा स्वसामर्थ्यम्भवितव्यम् कर्म्मक्षपयता ज्ञानेन न किंचित् सञ्चितक्रियमाणरूपम् कर्म्मोच्छेद्यं स्यात् किंचित्प्रारब्धरूपं चानुच्छेद्यमिति नहि अविशेषाग्निबीजसंयोगे केषाञ्चिद् वीजशक्तिर्दह्यते केषाञ्चिन्नदह्यत इति शक्यमभ्युपगन्तुम्। तत्रोच्यते न तावदुपेक्ष्यारब्धकर्म्मज्ञानोत्पत्तियुज्यते। अपेक्षिते च तस्मिन् धनुर्विमुक्तवाणस्येव प्रयुक्तरंहसो मध्ये निरोधाभावात्।भवति रंहसः क्षयः प्रतिपालनीयः प्रतीक्षणीय इति यावत् ज्ञानमपि मिथ्याज्ञानबाधनेनन प्रारब्धकर्म्मक्षपयति बाधितमपि मिथ्या ज्ञानम् द्विचन्द्रादिज्ञानमिव संस्काररूपेण कञ्चित्कालमनुवर्त्तत एव अपि च नैवात्र विवदितव्यम्। "जीवन्मुक्तश्च तद्विद्वान् पूर्व्वोपाधिगुणाँस्त्यजेत्" इत्यादिस्मृत्या जीवत एव मुक्तिश्र-

वणात् अत्र जीवनहेतोः प्रारब्धसत्त्वस्य मुक्तिहेतोः ज्ञानसत्त्वस्य च समानकालीनत्वव्यञ्जनात् सिद्धा प्रारब्धकर्म्मणोऽवश्यभोक्तव्यतेति वेदितव्यम्। श्रूयतेपि सञ्चितक्रियमाणयोर्ज्ञानप्रणाश्यत्वम्। "यथा-पुष्करपलाश आपो न श्लिष्यन्ति एवम्विदि पापं कर्म्म न श्लिष्यते" इत्यादिश्रुत्या। क्रियमाणकर्म्मणः अस्पर्शभावात् भोगाजनकत्वात् प्रणाशो व्यज्यते "तद्यथेषीकातूलमग्नौ प्रोतम्प्रदूयेतैवम् हास्य सर्व्वे-पाप्मानः प्रदूयन्ते" इत्यादिश्रुत्या सञ्चितकर्म्मणः प्रणाशोव्यज्यते "अवश्यमेव हि भोक्तव्यं कृतङ्कर्म्मशुभाशुभम्। नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि" इत्यादिस्मृत्या प्रारब्धकर्म्मणोऽवश्यभोक्तव्यता प्रतिपाद्यते। ननु प्रारब्धकर्म्मणः "तस्य तावदेवचिरम् यावन्न विमोक्ष्ये-ऽथ सम्पत्स्ये" इत्यादिश्रुतिभिः शरीरपातावधिकरणात् उक्तस्मृतौ कल्पकोटिशतैरपि इति वाक्यात् अतिबृहत्परिमाणस्थूलकालव्यञ्ज-नात् कथन्नासमञ्जस्यम् इति प्रष्टव्ये प्रतिवचनम् "यावदधिकारमव-स्थितिराधिकारिणाम्" इति ब्रह्मसूत्रात् अधिकारिणाम् लोकस्थिति-हेतुष्वधिकारेषु नियुक्तानाम् अधिकारतन्त्रत्वात् प्रारब्धस्थितेः अतिम-हापरिमाणस्थूलकालव्याप्यप्युपपद्यते इति वेदितव्यम्। यथाचोपलभ्यते पुराणादावुपाख्यानम् अपान्तरतमानामवेदाचार्य्यःपुराणर्षिर्विष्णुनि-योगात् कलिद्वापरसन्धौ कृष्णद्वैपायनो व्यासनामाऽभवदिति ब्रह्ममा-नसपुत्रोवशिष्ठश्च निमेः शापात् विगतपूर्व्वदेहः पुनः पितुराज्ञया मैत्रावरुणिर्बभूवेति एवम्भृगुसनत्कुमारदक्षनारदप्रमुखानामपिभूयसी देहान्तरोत्पत्तिकथा तेन तेन निमित्तेन स्मृतावुपलभ्यते मन्त्रार्थवादश्रु-तावपि प्रायोपलब्धिर्भवति तत्तत्कथानकस्येति तेष्वधिकारिकेषु केचि-त्पूर्व्वदेहपातानन्तरमपरदेहमाददते। केचित्तु विद्यमान एवपूर्व्वदेहे योगै-श्वर्य्यानुभावात् अनेकदेहादानन्यायेन अपरदेहमाददते। भवति च श्रुतिः। यथायम्भगवानादित्यः सहस्रयुगपर्य्यन्तम् कालनियमनादि-रूपजगतोधिकारं चरित्वा प्रारब्धोपरमे कैवल्यमनुभवति इति प्रक्रम्य "अथ तत ऊर्ध्वम् उदेत्यनैवोदेता नास्तमेतैकल एव मध्ये स्थाता" इत्यादि एवमेते अपान्तरतमादयः ईश्वरानुमत्या तत्राऽधिकारनियुक्ताः सन्तः सत्यपि ब्रह्मज्ञानाधिगमे कैवल्यहेतावक्षीयमाणप्रारब्धकर्म्माणो यावदधिकारमवतिष्ठन्ते अधिकारोपरमे क्षीणप्रारब्धकर्म्माणःकेवलिनो भवन्ति एतेऽधिकारिणः सकृत्प्रवृत्तवेगमेव प्रारब्धकर्म्मातिवाहयन्तः स्वेच्छयैव गेहादिव गेहान्तरम् देहाद्देहान्तरङ्गच्छन्तःस्वाधिकारनि-

र्व्वाहायालुप्तस्मृतय एव स्वायत्तेन्द्रियप्रकृतित्वात् उत्पाद्य देहान् युगपत्क्रमेण वा प्रविशन्ति अधितिष्ठन्ति च न चैते जातिस्मराः स्वीक्रियन्ते किन्तु त एव त एवैते इतिस्मृतिप्रसिद्धेः जातिस्मराः पूर्व्वनामप्रत्यभिज्ञानहीनाः परतन्त्राः साभिमाना भवन्ति । अधिकारिकास्तु पूर्व्वनामानः पूर्व्वप्रत्यभिज्ञानसम्पन्नाः स्वतन्त्रा निरभिमाना भवन्ति। अनयोरितिवैषम्यमिति वेदितव्यम्। अधिकारिकाणाम् सकृत्प्रवृत्तकर्म्मैव देहान्तरारम्भकारणम् न कर्म्मान्तरमिति वेदितव्यम्। प्रसिद्ध एव स्मृतौ प्रारब्धानवसान एव सुलभाया ब्रह्मवादिन्या जनकेन विवदितुकामायाः स्वदेहम्व्युदस्य जनकदेहप्रवेशः व्युद्यतेन सार्धम् एवम्व्याख्यानप्रपञ्चेन उपपन्नम् प्रारब्धकर्म्मणः अवश्यभोक्तव्यत्वम् चिरकालव्यापकत्वञ्च अथवा "कल्पकोटिशतैरपि" इतिवाक्यात् कल्पशब्दः न्यायशब्दपर्य्यायः "अभ्रेषन्यायकल्पास्तु देशरूपं समंजसम्" इत्यादिकोशात् ततो निरत्ययस्थानाध्यसनादिन्यायकोटिशतैरपि इत्यर्थो वेदितव्यः । असंख्यैः निरुपद्रवदेशसेवनादिनीतिरूपैः प्रतीकारैः प्रारब्धकर्म्माप्रतीकार्य्यम्। अप्रतीहार्य्यम्भोगमन्तरेति वेदितव्यम्। यद्वा अज्ञानिनाम् सञ्चितक्रियमाणान्यपि कर्म्माणि भोगमन्तरा चिरकालैरपि जगत्प्रवाहपतितासंख्यजन्मभिर्न क्षीयन्त इत्याभिप्रायो वेदितव्यः स्मृतेरस्याः। ननु ज्ञानिनामज्ञानिनामपि तुल्यम्प्रारब्धसत्त्वमभ्युपगम्यते तदानयोःकिम्वैषम्यम् तत्रोच्यते यावत्प्रारब्धम् ज्ञानिनाम् जीवन्मुक्तत्वेन शरीरधारणम्। अज्ञानिनान्तु बद्धत्वेन तद्धारणमिति तयोर्वैषम्यम्वेदितव्यम्। "ज्ञानिनोऽज्ञानिनश्चात्र समे प्रारब्धकर्म्मणी न क्लेशो ज्ञानिनो धैर्य्यान्मूढाः क्लिश्यन्त्यधैर्यतः" इत्याद्युक्तिरपि तद्वैषम्यप्रतिपादिकेति वेदितव्यम् "किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" इत्यादिवाक्यात् ज्ञानिनाम्भोग्ये भोगे च मिथ्यात्वनिश्चयात् काम्यत्वकामुकत्वे निरस्ते भवतः। तयोरभावे निस्नेहदीपवत् सुखदुःखभोगजौ हर्षविषादौ शान्तौ भवत इति वेदितव्यम्। यथा गन्धर्वनगरे ऐन्द्रजालिकनिर्मितम् किञ्चिद्वस्तु जानन्न कामयते किन्तु हसन्निदम् जिहासति तथा आपातरमणीयेषु स्रक्चन्दनवनितादिषु प्रतीतिमात्ररम्येषु विवेकी वासनाजन्मादिदोषदृष्ट्या नानुरज्यति किन्तु विरज्यति जिहासति च यथा पीयूषपानविनिवृत्तपिपासः न कालकूटं पातुमिच्छति तथा ज्ञानामृतसुखास्वादनतृप्तः विषयविषम्भोक्तुन्नेच्छति प्रारब्धकर्म्मप्राबल्यादवश्यम्भाविनी भोगेच्छा भोगं सम्पादयि-



ष्यत्येवेति सम्पादयतु नाम ।।तथापि विवेकी क्लिश्यन्नेव विष्टिगृहीतवद्भुंक्ते भुञ्जानोपि विवेकी नाद्यापि किञ्चिदात्मनः छिन्नमिति विद्वान् प्रारब्धप्रवृत्तः क्लिश्यति परन्तु अयं क्लेशो न संसारतापरूपः किन्तु वैराग्यरूप एवेति वेद्यम् । संसारतापस्तु अज्ञाननिमित्तोधिगतःलोके शास्त्रे च ज्ञानिनो भोगकालिकक्लेशस्तु तद्विपरीतः विवेकनिमित्त इति वेद्यम् । यतो विवेकी विवेकेन परिक्लिश्यन्नल्पेनैव भोगेन तृप्यति विवेकाभावे तु अविवेकी अनन्तभोगेपि कदाचिदपि कथञ्चिदपि केनचिदपि कुत्रचिदपि न तृप्यतीति वेदितव्यम् । यथा स्मर्यते "न जातु कामःकामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते"इत्यादि। ननु दोषदर्शनलक्षणे विवेके सत्यपिजाग्रति आरब्धकर्म्मज्ञानिनां भोगेच्छाजनकत्कथंस्यादिति प्रश्ने प्रतिवचनम् इच्छानिच्छापरेच्छाभेदात् त्रिविधम् प्रारब्धम् वेदितव्यम् । "इच्छानिच्छापरेच्छा च प्रारब्धं त्रिविधं स्मृतम्" इत्युक्तेः । तत्रेच्छा प्रारब्धं यथा अपथ्यभोक्तारः तस्कराः राजपत्नीगामिनश्च स्वानर्थं जानन्त एव प्रारब्धकर्म्मणो भोगस्य अपरिहार्यत्वात् तत्तद्भोगजनानुकूलेच्छया तत्तत्कर्म्मसु नियुज्यन्त इति वेदितव्यम । तथा भगवद्वाक्यम् "सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किङ्करिष्यति" इति । अनिच्छाप्रारब्धं यथा अर्जुनकृष्णप्रश्नोत्तराभ्यां स्मर्य्यते "अथकेनप्रयुक्तोयम्पापंचरति पूरुषः । अनिच्छन्नपि वार्ष्णेय बलादिवनियोजितः । कामएष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् । स्वभावजेन कौन्तेयनिबद्धः स्वेनकर्म्मणा । कर्त्तुंनेच्छसि यन्मोहात्करिष्यस्यवशोपि तत्" इतिपरेच्छाप्रारब्धं यथा वृद्धो मनुष्यः स्वयं कन्दुकक्रीड़ां इच्छन्नपि अनिच्छन्नपि नाचरति किन्तु कुमारनिर्वन्धानुरोधात् तस्येच्छयातत्प्रीत्यर्थम् क्रीड़ते ततश्च द्रुततरपतनोत्पतनप्रयतनादिनिबन्धनश्रमजन्यहस्तगादादिवेदनारूपप्रारब्धभोगमनुभवति यथा च कामुकः कामिनीच्छया तत्प्रीत्यर्थम् नानानिषिद्धकर्म्माचरन् क्रीड़ामृगायते काष्ठपुत्तलिकायते च । ननु ज्ञानिनामपि प्रारब्धवशादीच्छाङ्गीकारे किमिच्छन्निति श्रुतिविरोधः कथन्न स्यात् यतःकिमिच्छन्नितिश्रुत्या ज्ञानिनामिच्छा निषिध्यते । तत्रोच्यते नानया श्रुत्या वस्तुतः इच्छाया अभावोभिधीयते किन्तु सत्या अपि तस्याः वासनाजननकर्म्मसमर्ज्जनभोगानुभवनवासनाजननकर्म्मसमर्ज्जनभोगानुभवनादिरूपचक्रकहेतुसमर्थप्रवृत्ति-

जनकत्वम् नास्तीति बोध्यत इति वेदितव्यम् । यथा भर्ज्जितानि बीजानि स्वयंस्वरूपेण विद्यमानान्यपि नाङ्कुरादिकार्यजनकानि भवन्ति तथा विद्वदिच्छा स्वयं रूपेण विद्यमानापि इष्यमाणपदार्थस्यासत्यत्वज्ञानेन बाध्यमाना न पूर्व्वोक्तप्रवृत्तिजननी वासनादिकार्यक्षमा भवतीत्यर्थः । ज्ञानिनां प्रारब्धम् दग्धरज्जूसमम्वेदितव्यम् । यथा दग्धा रज्जुः रज्वाकारेण स्थितापि न बन्धनकार्य्यसमर्था भवति तथैतत्प्रारब्धं स्वरूपप्रतिष्ठम् भोगं जनयदपि न ज्ञानिनां हर्षविषादप्रदम्भवति । "जीवन्नेवेह विद्वान् हर्षशोकाभ्याम्विमुच्यते" इत्यादिश्रुतिरपि ज्ञानिनां सत्यपि प्रारब्धे तद्भोगे च तज्जनितसुखदुःखानुभवम् निषेधयति । तथा च स्मर्य्यते "दुःखेष्वनुद्विग्नमना सुखेषु विगतस्पृहः । वीतरागभयक्रोधःस्थितधीर्मुनिरुच्यते" इति ननु प्रारब्धस्य अवश्यभोक्तव्यत्वस्वीकृतौ लोकशास्त्रसम्मतायाः शान्त्याः वैयर्थ्यं कथन्न स्यादिति प्रष्टव्येप्रतिवचनम् यद्यपि "प्रारब्धकर्म्मणाम् भोगादेव क्षयः" इत्यादिशास्त्रीयसमयात् प्रारब्धमवश्यम्भाविभोगम् तथापि शान्तिसामर्थ्यात् तदुत्कटं सत् भवत्यनुत्कटम् प्रबलं सत् दुर्ब्बलम् तत्तद्भोगप्रदं सदपि अधिकवेदनमूनवेदनम्भवतीत्यर्थः । इतरथाहि शान्त्या प्रारब्धकर्मणि सर्वथा क्षीणे सति देहनाशः प्रसज्येत । अपि च उपस्थितशरीराविरोधेन सकलारिष्टझटितिप्रशमनपूर्वकेत्यादिसङ्कल्पप्रसिद्धेः शान्तिर्न शरीरविरोधिनी व्यज्यते । किन्तु तदविरोधिन्येव । अतश्च उपपद्यत एव न शान्तिः प्रारब्धक्षयकरी किन्तु तदौत्कट्यनिवारिणी तन्न्यूनत्वकारिणीति भावः शान्त्याः शरीरस्थितिहेतुप्रारब्धक्षयहेतुत्वे स्वीकृते शरीरविरोधित्वमव्याहतं स्यात् ततश्च सकलसम्प्रदायविरोधापत्तिः प्रसज्येत । तस्माच्छान्तिः प्रारब्धभोगन्यूनत्वकरीत्युपपन्नं वेदितव्यम् । अपि च "शमथस्तु शमः शान्तिः" इति कोशात् शान्तिशब्दः शमशब्दपर्य्यायः प्रसिद्धः शमस्तु चित्तोपशमे प्रसिद्धः तत्र शमस्तु न चित्तक्षयकरो दृश्यते । किन्तु तत्प्राबल्यनिवारक एव तथा च शान्तिरपि प्रारब्धप्राबल्यनिवारिणी तन्न्यूनत्वहेतुरेवोपपद्यते न तत्क्षयहेतुरिति वेदितव्यम् । भवति च किम्वदन्ती लोकप्रसिद्धा वक्ष्यमाणा द्वौ ब्राह्मणक्षत्रियौ प्राचीनौ सखायौ प्राणदण्डप्रदराज्यपदप्रदप्रारब्धभागिनौ अभवताम् यदृच्छया तत्प्रारब्धभोगदिने चतुर्द्दशीतिथौ तावुभौ क्रमात् शिवाराधनम्वेश्यासङ्गसुखास्वादनञ्च स्वीकृतवन्तौ तत्र प्रथमो नक्तव्रती यावद्दिनं

निराहारः श्रीफलदलानि शिवायार्पयितुम् आचिन्वन् कण्टकविद्धचरणःप्राणदण्डप्रतिनिधिन्तद्वेदनामन्वभवत्। द्वितीयःराज्यपदप्रतिनिधिम्पथिगतश्चतुश्शतमिता मुद्रा अलभत्। तदनन्तरं प्रथमो दध्यौ अहो धर्मसेविनोपि ममदुस्सहवेदना इति। द्वितीयो मुमुदे अहोममाधर्म्मसेविनोपि धनप्राप्तिरिति। तदनन्तरम् तयोस्तत्तत्प्रारब्धसूचिका धर्म्माधर्मनिबन्धनतत्तन्न्यूनत्वज्ञापिका तयोर्विषादहर्षहारिका क्रमशोधर्माधर्म्मंप्रवृत्तिनिवृत्तिकारिका नभोवाणी वभूवेति इयङ्किम्वदन्ती समभिहितदुरितारब्धप्राबल्यप्रशमनशान्तिस्वरूपनिर्णयघोषिणी। तथा च सुकृतारब्धप्राबल्यप्रशमनदुःकृतिरूपसमुद्घोषिणीति वेदितव्यम्। शीतगूष्णगूशैत्यौष्ण्यप्राबल्यहरौ प्रत्यक्षौ तथा शान्तिपापकृती दुःकृतसुकृतप्राबल्यप्रशमिन्यावि्ति वेदितव्यम्। एतावता ग्रन्थसन्दर्भेण व्याख्यातानि प्रारब्धविशेषणानि कुलालचक्रवत् प्रवृत्तिवेगमप्रतिबद्धमित्यादीनि समुपपन्नानि जातानीति वेदितव्यम्॥

कर्म्म प्रसंख्यानगतक्रमलब्धसञ्चितकर्म्म परिचाययति श्रीमान् सूत्रकारोऽग्रिमसूत्रेण।

## तथाविधम्विद्यमान शीररानुपभोग्यं संचितम् १।२।५

तथाविधन्तथा तादृशी विधा प्रकारो यस्येति तथाविधम् तथाशब्दो यथाशब्देन सम्बन्ध्यते हि ततः यथा प्रारब्धस्य पूर्व्वार्ज्जितत्वरूपप्रकारः तथा पूर्व्वार्ज्जितत्वरूपप्रकारोयस्येति तथाविधम् पूर्व्वार्ज्जितमित्यर्थः। प्रारब्धस्य विद्यमानशरीरोपभोग्यत्वरूपप्रकारस्य सञ्चितस्य विद्यमानशरीरानुपभोग्यत्वरूपप्रकारात् वैपरीत्यात् न तथाविधं शब्दः विद्यमानशरीरोपभोग्यशब्दम्परामृशतीति वेदितव्यम्। विद्यमानशरीरानुपभोग्यम् विद्यमानशरीरेण वर्त्तमानदेहेन अनुपभोग्यम् उपभोगायोग्यमिति तथाभूतम् अविद्यमानशरीरोपभोग्यमिति वेदितव्यम्। "चिञ् चयने" इतिसकर्मकधात्वनुगतम् निष्ठाख्यक्तप्रत्ययान्तम् पदम् सञ्चितङ्कर्म्मवाच्यम्। सञ्चयक्रियाविषयीभूतमनादिकालपारम्पर्य्येण राशिरूपेण सम्पादितमित्यर्थः। सञ्चितकर्म्मणो न स्वरूपेण स्थितस्य भोगदातृत्वम्। किन्तु एकदशेन केनचिदंशेनेति यावत् प्रारब्धरूपेण तस्य भोगजनकत्वमित्यभ्युपगमनात् शास्त्रकारैः प्रार-

ब्धसम्बन्धीनि व्याख्येयानि स्थानानि प्रारब्धपरिचायकसूत्रीयव्याख्याने व्याख्यातान्येवातः संक्षेपेणैव सञ्चितमात्रम् परिचितमत्रेति वेदितव्यम्। ननु सञ्चितकर्म्मणः प्रारब्धजनकत्वे पौनःपुन्येन स्वांशेन सञ्चितम् प्रारब्धञ्जनयत् स्वयञ्चिरकालेन सर्व्वांशव्ययवत् कथन्नक्षीयते। सति च क्षयाङ्गीकारे विनापि ज्ञानम् सञ्चितकर्म्मक्षयोपपत्तौ ततश्च मोक्षोपपत्तौ "ज्ञात्वा तम्मृत्युमत्येति नान्यः पन्थाविद्यते यनाय" इत्यादिश्रुतिर्व्याकुप्येत "ज्ञानादेवामृतत्वं नहि शशकवधूः सिंहपोतम्प्रसूते" इत्यादिस्मृतिश्च व्याहन्येत। तत्रोच्यते यद्यपि संचितम् स्वांशव्ययवच्चिरकालेन नाशभागित्वमर्हति तथापि क्रियमाणकर्म्मणा पौनःपुन्येन प्रपूर्य्यमाणम् यावत् स्वात्माधिगमम् निरत्ययमेवावतिष्ठति इतिवेदितव्यम्। यथा पर्ज्जन्यजनकत्वेन गभस्तिहस्तहस्ताकृष्यमाणोदकोप्युदधिः वृष्टिपूरितनदनदीपूरसम्प्लुतोदकः अचलप्रतिष्ठः अनत्ययरूपो दृश्यते इति वेदितव्यम्। श्रूयतेपि संचितकर्म्मणो ज्ञानविनाश्यत्वम् "तद्यथेषीकातूलमग्नौ प्रदूयेतैवम् हास्य सर्व्वे पाप्मानः प्रदूयन्ते" इत्यादि श्रुतिभिः यद्यपिभोगेन कर्म्मक्षयोभ्युपगम्यते परन्तु भोगः प्रारब्धमत्यन्तमपनयति निःशेषयतीत्यर्थः प्रारब्धरूपेण परिणतम् संचितम् अपनयन्नपि क्रियमाणप्रपूर्य्यमाणम् स्वरूपस्थितम् न क्षपयितुं शक्यम् सर्व्वांशेन किन्तु प्रारब्धरूपांशेनैव इति वेदितव्यम्। तथा व्यज्यतेपि "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि" अत्र आसमन्तात् प्रारब्धरूपेण भुक्तमपि कर्म्म संञ्चितमित्यर्थः। कल्पकोटिशतैरपि पौनः पुन्येन क्रियमाणप्रपूर्य्यमाणत्वात् ज्ञानमन्तरा न क्षीयते तदेव प्रारब्धरूपेण परिणतम् सुकृतदुःकृतरूपमिति यावत्। अवश्यभोक्तव्यम् भोगनाश्यमेव भवति न ज्ञानानलदाह्यमिति भावो व्यज्यते एतत्स्मृतिपूर्व्वार्धेन "अवश्यमेव भोक्तव्यंकृतङ्कर्म्मशुभाशुभम्" इत्यनेनेति वेदितव्यम्। यद्यप्यस्याः स्मृतेः उत्तरार्धः अपरांशवान् पूर्व्वम्व्याख्यातः अधुना तु विलक्षणाशयवान्। परन्तु शब्दस्य कामधेनुरूपत्वस्वीकारात् न काचिद्धानिर्वेदितव्या यक्षानुरूपोबलिरिति न्यायात् प्रक्रमानुसारिणा प्रमाणबलिताशयेन भवितव्यमित्यर्थः॥

एवं सञ्चितस्वरूपम्प्रदर्श्यावशिष्टम् क्रियमाणङ्कर्म्म परिचाययति सूत्रकारः

# विद्यमानशरीरसम्पादितमुभयविधम् क्रियमाणम् १।२।६।

विद्यमानशरीरेण वर्त्तमानदेहेन सम्पादितम् निष्पादितम् समर्ज्जितमिति भावः क्रियमाणम् कृधातुनिर्गतम् कर्म्मवाच्यम् यज्ञादिरूपम् हिंसादिरूपञ्च शानच् प्रत्ययस्य नीयमानप्रत्ययान्तम्वर्त्तमानकालिकम् सुकृतदुःकृतक्रियाविषयीभूतमाचर्य्यमाणम्वेदितव्यम्।अत्र अविद्यमानशरीरासम्पादितमिति योजनीयम्। उभयविधम् उभयविधौ द्वेविधे प्रकारौ यस्येति उभयविधम् प्रारब्धकर्म्मणोविद्यमानशरीरोपभोग्यत्वरूपः सञ्चितकर्म्मणो विद्यमानशरीरानुपभोग्यत्वरूपश्च प्रकारो यस्येति तथाभूतम्। विद्यमानशरीरोपभोग्यविद्यमानशरीरानुपभोग्यमित्यर्थः। सुकृतदुःकृतरूपे द्वे विधे प्रकारौ यस्येति वा तथाभूतम्। यद्वा ऐहिकफलप्रदमामुष्मिकफलप्रदञ्चेत्युभयविधम्। ननु एकस्यैव क्रियमाणस्य फलभोगसाधारणकारणस्य किन्निबन्धनमेतद्द्वैविध्यमिति प्रष्टव्ये प्रतिवचनम्। कामनाविशेषनिबन्धनम् अपूर्व्वोत्पत्तितारतम्यनिबन्धनञ्चेति वेदितव्यम्। तथाहि स्वर्गकामो यजेत। अत्र कामनायाः स्वर्गविषयत्वात् यज्ञरूपक्रियमाणस्य विद्यमानशरीरानुपभोग्यत्वमुपपन्नम्। पुत्रकामो यजेत। अत्र कामनायाः पुत्रविषयत्वात् पुत्रेष्टिरूपक्रियमाणस्य विद्यमानशरीरोपभोग्यत्वमुपपन्नमिति वेदितव्यम्। तथाहि एकस्य ऐहिकफलप्रदत्वम् अपरस्य आमुष्मिकफलप्रदत्वञ्चेति वेदितव्यम्। एवंकामनाविशेषनिबन्धनद्वैविध्यम्प्रतिपाद्य अपूर्व्वोत्पत्तितारतम्यनिबन्धनं द्वैविध्यम् प्रतिपाद्यते। "अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते। त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिःपक्षैस्त्रिभिर्दिनैः" इतिस्मृतिः। अत्युत्कटपुण्यपापयोरिहैव अत्र विद्यमानशरीर एव। यद्वा अत्र मर्त्यलोक एव अत्यौत्कट्यतारतम्येन तावता तावता कर्म्मणा अत्युत्कटापूर्व्वोत्पत्तितारतम्येन चिरेण अचिरेण च कालेन फलप्राप्तिमवगमयति।तत उपपद्यते तादृशस्य क्रियमाणस्य विद्यमानशरीरोपभोग्यत्वम् ऐहिकफलप्रदत्वम् च अत्रैव च स्मृतौ इहैव शब्दः अविद्यमानशरीरलोकान्तरव्यावर्त्तकः अनीदृशयोरनत्युत्कटापूर्व्वोत्पत्तितारतम्येन कियता अनभिहितेन कालेन तत्र तत्र फलप्राप्तिं द्योतयतीति वेदितव्यम्।तत उपपद्यते तादृशस्य क्रियमाणस्य विद्यमानशरीरानुप-

भोग्यत्वम् आमुष्मिकफलप्रदत्त्वञ्चेतिवेदितव्यम्।"क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्म्मजा" इतिभगवद्वाक्यमपि पोषयत्युक्तद्वैविध्यस्मृतिमितिवेदितव्यम्।प्रारब्धस्य अवश्यभोक्तव्यत्वस्वीकारानुसन्धानात्।भवति विशयोत्रत्यः किंक्रियमाणमवश्यभोक्तव्यमुतानवश्यभोक्तव्यमाहोस्विदुभयविधमिति। तत्रोच्यते नाद्यः "धर्म्मेण पापमपनुदति" इत्याद्युक्तिवैयर्थ्यप्रसङ्गात्।न द्वितीयःशास्त्रसम्मतकृतहानिदोषप्रसङ्गात्। न तृतीयः एकाधिकरणक तदुभयरूपत्वासम्भवात्। परन्तु कल्पत्रयदोषो न युज्यते कर्म्ममात्रम् अवश्यभोक्तव्यमनवश्यभोक्तव्यम्वा भवितुमर्हति। यथा लोके प्रत्यक्षसिद्धङ्कृषिवाणिज्यादिरूपङ्कर्म्म शस्यनिष्पत्तिमूलवृद्धिसाफल्यात् अवश्यभोक्तव्यम् तत्तन्नैष्फल्यादनवश्यभोक्तव्यम्। तत्र "ब्रह्महत्यां योऽश्वमेधेन यजते" इत्यादिप्रायश्चित्तप्रतिपादनश्रवणात् भवितव्यम्।कर्मणाक्रियमाणेनअनवश्यभोक्तव्यमितिवेदितव्यम्।अयमपरःक्रियमाणस्य अनवश्यभोक्तव्यप्रतिपादकव्यपदेशो भवति "यथापुष्करपलाश आपो न श्लिष्यन्ते एवमेवम्विदि पापङ्कर्म्म न श्लिष्यते" इतिश्रवणात्"कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः। जलम्भित्वा यथा पद्मं नरकादुद्धराम्यहम्" इतिस्मरणाच्च । अत्र नरकशब्देन नरकसाधनम् पापं लक्षणीयम् वेदितव्यम्। जीवनसाधनभूम्यादौ जीवशब्दप्रयोगवत् । भवत्यपि नाम्नाम्पापध्वंसनिमित्ताभिधायिनी श्रुतिः "नास्ति पातकमहो कलिकाले नामकीर्त्तनपरस्य" इति "अवशेनापि यन्नाम्नि कीर्त्तिते सर्व्वपातकैः। पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव" इत्यादिभिः पुराणे तावत् सहस्रशोनाम्नःपापरूपक्रियमाणेन्धनदहनसामर्थ्यमवगम्यते। अवशेनापीत्यादिस्मृतौ पुमान् शब्दप्रयोगेन नामकीर्त्तनेन वर्णाश्रमाद्यनियमउक्तइतिवेदितव्यम्भवति। इति न चैतानि नाममाहात्म्यबोधकानि वाक्यानि अर्थवादरूपाणि शङ्कनीयानि "विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः" इतित्रिविधस्मृतार्थवादस्य "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति मीमांसावाक्यात् विधिशेषत्वमवकल्पते। विधिस्थले "डुकृञ् करणे" भू "सत्तायाम्" "अस भुवि" इति त्रीनेव धातून् भावनासामान्यवाचिनः सर्व्वव्याप्त्यर्थमुदाहरति लिङाद्यर्थान् विधिधातूनामनेकत्वेपि उच्यते शास्त्रकारैः "कुर्यात् क्रियते कर्त्तव्यम् भवेत् स्यादिति पञ्चमम । एतत्स्यात्सर्व्ववेदेषु नियतम्विधिलक्षणम्" इति। अत्र तु एषां नाममाहात्म्यबोधकवाक्यानाम्

विधिशेषत्वाभावात् नार्थवादत्वं शङ्कनीयं स्यात्। न च विध्यश्रवणात् अन्यशेषता कल्पनीया यदाग्नेयोऽष्टाकपालो भवतीत्यादिवदप्राप्तार्थत्वेन विधिकल्पनोपपत्तेः।उच्यतेपि "विधिरत्यन्तमप्राप्तौ नियमःपाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" अत्र आत्यन्तिकाप्राप्तिरेव विधित्वघटिकेति उपपद्यते। यथा "अहरहस्सन्ध्यामुपासीत" अत्र अत्यन्ताप्राप्तस्य सन्ध्योपासनस्य विधित्वम्भवति। प्रसङ्गप्राप्ते नियमपरिसंख्ये व्याख्यायेते। तथाहि नियमः पाक्षिके सति तथा व्रीहिभिर्यजेत अत्र व्रीहियजने व्रीहिरूपात् तण्डुलरूपनिःपादाय व्रीहीनवहन्ति इतिवाक्येन तण्डुलनिःपादनोलूखलमुशलाभ्यामेव व्रीह्यवहननेन तण्डुलनिःपत्तिः स्वीक्रियते। अत्र तण्डुलनिष्पादनस्य नखविदलनादिनापि पक्षान्तरेण सम्भाव्यमानत्वेपि तत्पक्षपरित्यागेन अवहननरूपपक्षस्यैव स्वीकारो नियमः अवहनननिःपन्नतण्डुलस्यैव अपूर्व्वजनकत्वमित्यर्थो वेदितव्यः। अनेकपक्षसाध्यत्वात् तण्डुलरूपनिःपादनस्य पाक्षिकत्वम्वेदितव्यम्। "तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" यथा "इमामगृभ्णन्। रसनामृतस्य" इति वाक्यात् अश्वे गर्द्दभे च रसनादानम्प्राप्यते। तत्र अश्वाधानीमादत्ते इति वाक्यात्। अश्वरसनाग्रहणम्परिसंख्यायते गण्यते। अश्वरसनाग्रहणविधानेनैव गर्द्दभादिरसनाग्रहणं अपरिसंख्यायते अगण्यत इत्यर्थः। यद्यपि कोटिद्वयपातित्वसादृश्यात् नियमपरिसंख्याने अभिन्ने एकरूपे प्रतीयेते। तथापि नियमितान्यतरपक्षस्य न विधिर्वाक्ये प्राप्तिर्दृश्यते। किन्तु विध्यप्राप्तस्यापि तत्तत्कार्य्यजनकत्वसामर्थ्यात् प्राप्तिर्भवति। स च नियमेन निषिध्यते। परिसंख्यातान्यतरपक्षस्य सामान्यतो विधिवाक्यस्वीकृतत्वेपि विशेषविधिवाक्येन तयोर्वैषम्यम्वेदितव्यम्। वस्तुतः अयोगव्यवच्छेदो नियमः, अन्ययोगव्यवच्छेदः परिसंख्या वेदितव्या। एवम्प्रसंगप्राप्ते नियमपरिसंख्ये प्रतिपाद्य प्रकृतम् नामकीर्त्तनम्प्रतिपाद्यते। मन्त्रवाक्येषु "मर्त्ता अमर्त्तस्य ते भूरि नामा मनामहे विप्रासो जातवेदसः आ एवं जानन्तो नाम चिद्विवक्तनो" इत्यादिषु नाम्नः तपोदानादिसर्व्वधर्म्माधिक्येन पापापहत्वमवगम्यते। उपपादितञ्च मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यम् देवताधिकरणे। तस्मात् सर्व्वथा नामकीर्त्तनेन दुःकृतरूपक्रियमाणस्य अनवश्यभोक्तव्यता प्रतिपादितेति वेदितव्यम्। ज्ञानस्य पुण्यपापरूपोभयविधक्रियमाणस्य दहनत्वम्प्रसिद्धम् "ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात्कुरुतेऽर्ज्जुन"

इति। अविशेषेण सर्व्वकर्म्मप्रणाशः स्मरणात्। प्रायश्चित्तस्य पापरूपस्यैव क्रियमाणस्य क्षपणत्वम्वेदितम् "धर्म्मेण पापमपनुदति" इत्यादिश्रवणात्। नामकीर्त्तनस्य तु पापापहत्वम् धर्म्मोत्पादकत्वम् चित्तसंशोधनानुकूलज्ञाननिःपादनपूर्व्वकं धर्म्मरूपस्यापि क्रियमाणस्य क्षपणत्वमिति वेदितव्यम्। "कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते भस्मीभवन्ति तस्याशु महापातककोटयः। गोकोटिदानं ग्रहणेषु काशी गङ्गाप्रयागायुतकल्पवासः। यज्ञायुतम्मेरुसुवर्णदानम् गोविन्दनाम्ना न कदापि तुल्यम्। तत्कर्मनिर्हारमभीप्सताम् हरेर्गुणानुवादः खलुः सत्वभावनः। भक्तिर्ज्ञानाय कल्पते" इत्यादिस्मरणात् ग्रन्थविस्तारभिया नामकीर्त्तनस्य भक्तिरूपत्वम् "श्रवणङ्कीर्त्तनम्विष्णोः" इत्यादिस्मरणात् सगुणब्रह्माधिगमकत्वम् "अक्षरं हि परब्रह्म गोविन्देत्यक्षरत्रयम्। तस्मादुच्चरितं येन ब्रह्मभूयाय कल्पते" इत्यादिस्मरणाच्च न प्रतिपादितम्। तच्च वैष्णववादीनाम् साम्प्रदायिकग्रन्थेष्वन्वेष्टव्यम्। क्रियमाणम्पंचविधम् नित्यनैमित्तिक प्रायश्चित्तकाम्यनिषिद्धभेदात् "अकुर्वन् विहितङ्कर्म्म" इत्यादिस्मरणप्रसिद्धं यदकरणेप्रत्यवायः इति लक्षणलक्षितम् अहरहः यावज्जीवम् नित्यम् सदा इत्यादिपदघठितम् नित्यम्वेदितव्यम्। तत्रोदाहरणानि" "अहरहःसन्ध्यामुपासीत" "यावज्जीवमग्निहोत्रञ्जुहोति" "नित्यं च स्वाध्यायप्रवचने सदोपासीत नीचवत्" इत्यादीनि वेदितव्यानि। अकरणे प्रत्यवायजनकम् करणे पुण्यफल जनकम् "श्राद्धकृत्स विमुच्यते" इत्यादिस्मरणात्। पितृदेवादयो निमित्तम् प्रवृत्तिनिमित्तम् यस्य तन्नैमित्तिकम्। पितृदेवाद्युद्देशेन विधीयमानमितियावत्। श्राद्धबलिवैश्वदैवतपार्व्वणादीनि उदाहरणानि वेदितव्यानि। तच्च नैमित्तिकम् द्विविधम् स्वीक्रियते मीमांसकैः नित्यनैमित्तकम् काम्यनैमित्तकञ्चेति। नित्यनैमित्तकम् मृतश्राद्धम् नित्यश्राद्धं वार्षिकश्राद्धं नवोदकनवान्नादिश्राद्धं आपरपक्षीयपार्व्वणश्राद्धं पुत्रीविवाहपुत्रोपनयनादिसंस्कारकालिकमातृकापूजाभ्युदयिकश्राद्धञ्च काम्यनैमित्तिकम् तीर्थप्राप्तिहेतुकश्राद्धपुत्रविवाहकालिकमातृकापूजाभ्युदयिकश्राद्धादिकम् अकरणे प्रत्यवायजनकम् करणे फलजनकञ्चेति वेदितव्यम्। यद्यपि सामान्यतःकाम्यनैमित्तिकाकरणे प्रत्यवायो न श्रूयते तथापि "श्रुतिः स्मृतिः सदाचारः" इत्यादिरूपेण धर्म्मलक्षणस्मरणात् शिष्टपरिगृहीतत्वात् देवपितृनिमित्तत्वात् काम्यत्वेपि सदाचारविरोधनिन्दानुरोधा-

भ्याम् प्रत्यवायजनकत्वं स्वीक्रियते। पार्व्वणादीनां नैमित्तकत्वं न व्याहन्यते काम्यत्वं न प्रसज्यत इति वेदितव्यम्। प्रायश्चित्तम् दोषसंयोगेन विधीयमानं दुषक्षपणार्थताघटितम् पापापनोदनमिति यावत्। अश्वमेधादिद्वादशाब्दादिकृच्छ्रछान्द्रायणादिगायत्रीजपादि मन्वाद्युक्तम् वेदितव्यम्। यद्वा भगवदाराधनमपि भागवतानां सम्मतम्प्रायश्चित्तम् वेदितव्यम् "न तथा ह्यघवान्राजन् पूयेत तप आदिभिः। यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया। प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम्। न निःपुनन्ति राजेन्द्र सुराकुम्भमिवापगाः" इत्यादिस्मरणात्। यद्यपि ज्ञानस्यापि पापनिवर्त्तकत्वमस्त्येव तथापि तस्य कर्म्मरूपत्वास्वीकारात् अविशेषेण पुण्यपापोभयापहत्वरूपवत्त्वात् पापमात्रक्षपणप्रायश्चित्तवैलक्षण्यात् नात्र स्वीकार इति वेदितव्यम्। काम्यम् कामादनपेतम् "स्वर्गकामो यजेत" इत्यादिवाक्यघटितम् इष्टापूर्त्तदानव्रततपस्तीर्थस्नानादिरूपम् इहामुत्र कामितकामप्रदम् अकरणे अप्रत्यवायजनकम् वेदितव्यम्। काम्यत्वेपि पार्थिव शिवलिङ्गपूजनादौ एकादशीव्रतादौ "शिरसो वापि कर्त्तनम् अन्नमाश्रित्य तिष्ठन्ति पापानि हरिवासरे" इत्यादिस्मृत्या तत्तदकरणाननुमतिसत्त्वात् व्यज्यते नित्यत्वविशिष्टकाम्यत्वमितिवेदितव्यम्। निषिद्धम् करणे प्रत्यवाय जनकम् "ब्राह्मणो सुरां न पिवेत् ब्राह्मणो मांसं न भुञ्जीत माहिंस्यात्सर्व्वाभूतानि" इत्यादिवाक्यघटितम् महापातकोपपातकाद्यभक्ष्यभक्षणागम्यागमनादिरूपम् नरकयातनागर्भादिवेदनाराजदण्डनादिप्रदम्वेदितव्यम्। केचित्तु प्रायश्चित्तकाम्यकर्म्मणी पापापनोदकामविनोदप्रवृत्तिनिमित्तत्वात् नैमित्तिककर्म्मणि अन्तर्भावयन्ति। निषिद्धञ्च तदकरणरूपविधानस्य विहितस्य नित्यम्विधीयमानत्वात् "न वदेज्जामिनीम्भाषाम्प्राणैः कण्ठगतैरपि" इत्यादिस्मृतेः नित्ये कर्म्मण्यन्तर्भावयन्ति। तत्र नित्यादिरूपविहितङ्कर्म्म सामान्यविशेषभेदाद् द्विविधम्वेदितव्यम्। सामान्यम् "सत्यं दया तपः शौचन्तितिक्षेच्छा शमो दमः। अहिंसा ब्रह्मचर्य्यञ्च त्यागः स्वाध्याय आर्ज्जवम्। सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः। नृणाम्विपर्य्ययेहेक्षा मौनमात्मविमर्शनम्। अन्नाद्यादेः सम्विभागो भूतेभ्यश्च यथार्हतः। तेष्वात्मदेवताबुद्धिः सुतरान्नृषु पाण्डव। श्रवणङ्कीर्त्तनञ्चास्य स्मरणम्महताङ्गतेः। सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम्। नृणामयम्परोधर्म्मः सर्व्वेषां समुदाहृतः। त्रिंशल्लक्षणवान् राजन् सर्व्वात्मा येन तुष्यति" इति-

स्मृतिप्रसिद्धम् । अत्र स्मृतौ ब्रह्मचर्य्यस्वाध्याययोः सर्व्ववर्णाश्रमसाधारणत्वम् कथन्न विरुद्धम् इति प्रष्टव्ये प्रतिवचनम् "कर्म्मणामनसा वाचा सर्व्वावस्थासु सर्व्वदा। सर्व्वत्र मैथुनत्यागो ब्रह्मचर्य्यन्तदुच्यते" इति स्मृतिस्मृतम् ब्रह्मचर्य्यम् त्रैवर्णिकानुष्ठेयवेदाध्ययनादिव्रतातिरिक्तम् न विरुद्धम् इतिवेद्यम् । ननु "ऋतौ भार्य्यामुपेयात्" इतिश्रवणात् कथन्न धर्म्मपत्नीस्वीकरणानुकूलगार्हस्थ्याश्रमविरुद्धमिति प्रष्टव्ये प्रतिवचनम् "लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना। व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" इति स्मरणात् ऋतौभार्य्यागमनम् रागत एव नित्यम्प्राप्तम् न च अपूर्वविधिप्राप्तमिति वेदितव्यम्। तथाहि व्याख्यायते उक्तस्मृतिः । ननु व्यवायादीनामपि "ऋतौ भार्य्यामुपेयात्" "हुतशेषम्भक्षयेत्" इत्यादिना विहितत्वात् सामान्यतस्तन्निषेधो न युक्तस्तत्रोच्यते 'लोक' इति । व्यवायः मैथुनम् । आमिषम्मांसादि । मद्यं सुरा । नित्या रागत एव नित्यम्प्राप्ता । तु अव्ययम् अपूर्व्वविधिप्राप्तनित्यत्वव्यावर्त्तकम् । जन्तोः सर्व्वसाधारणप्राणिनः । अतस्तत्र व्यवायामिषमद्यसेवासु चोदना विधिर्नास्ति ननु "ऋतौ भार्यामुपेयात्" इत्यादिना विधिर्दर्शितः इति सत्यम् । परन्तु न त्वयमपूर्व्वविधिः रागतः प्राप्तत्वात् । किन्तु नियमविधिरूपेण रागिणामनुज्ञामात्रङ्कुरुते। विरागिणान्तद करणर्णाचर्व्यज्यते। तदुच्यते व्यवस्थितिरिरिति । तेषु व्यवायादिषु कैर्विवाहयज्ञसुराग्रहैः रागे सति विवाहविषय एव व्यवायः कार्य्यः । यज्ञ एवामिषसेवनम् । "सौत्रामण्यां सुराग्रहान् गृह्णन्ति" इति श्रुतेः । तत्रैव मद्यसेवनमितिनियमः । अन्यत्र तत्तदनभ्युपगमनमिति । ननु च नियमपक्षेप्यावश्यकत्वात् न निषेधो युक्त इत्यत्रोच्यते आसु निवृत्तिरिति । आसु व्यवायामिषमद्यसेवासु निवृत्तिरिष्टा, सति वैराग्ये इति योजनीयम् । अत्रायम्भावः नायं नियमविधिरपि वस्तुतोनियमविधिः तासाम्व्यवायामिषमद्यसेवानाम् रागतो नित्यप्राप्तत्वात् अतस्तासां निवृत्तिः। वस्तुतः परिसंख्यैवेति वेदितव्यम् । कथन्तर्हि व्यवस्थितिरित्युक्तम् तदुच्यते न तावत् परिसंख्याविधिना श्रुतिर्निवृत्तिम्वक्ति । तथा सति स्वार्थत्यागः परार्थकल्पनाप्राप्तबाधश्चेति दोषत्रयं स्यात् । अतः क्वचित् प्राप्स्यतोप्यर्थस्य प्रापणमनर्थकमित्यपूर्व्वविधिद्वारा अन्यनिवृत्तिः फलतो भवति । तद्यथा "इमामगृभ्णन् रसनामृतस्येति अश्वाभिधानीमादत्ते" इत्यत्र रसनालिङ्गतो गर्दभाश्वाभिधानीर-

सन्निधये प्राप्स्यतो मन्त्रस्य अपूर्व्वविधिद्वारा परिसंख्योच्यते। यथोक्तम् तन्त्रवार्त्तिके "अप्राप्तविधिरेवायमतोमन्त्रस्य निश्चितः। परिसंख्या फलेनोक्ता न विशेषः पुनः श्रुतेः" इति क्वचित्तु रागतो नित्यप्राप्तस्य अप्राप्तांशपूरणलक्षणस्य नियमफलस्यापि अभावान्नियमविधिना फलतः परिसंख्या भवति। यथा "पञ्च पञ्चनखा भक्ष्याः" इति तथा रागतो नित्यवत्प्राप्तस्य व्यवाया-देर्विवाहादिनियमेनाभ्यनुज्ञाद्वारा परिसंख्यैवेति। ननु यद्यनुज्ञामात्र-मेतद्भवेत्तर्हि "ऋतुस्नातान्तु यो भार्य्यां सन्निधिन्नोपगच्छति। घोरायाम्भ्रूणहत्यायाम्पच्यते नात्र संशयः" इत्यादिदोषस्मरणं न स्यात्। नैष दोषः मनसि कामे सत्यपि तस्यामरुच्या द्वेषादिना वा तामनुपगच्छतो दोषः तत्स्मरणोपपत्तिरिति सर्व्वमनवद्यम्व्या-ख्यानम्वेदितव्यम्। स्वाध्यायश्च वेदाध्ययनरूपः त्रैवर्णिकस्यैव विधेयः कथन्तदितरवर्णविधेयः स्यादिति पृष्टव्ये प्रतिवचनम्। इतरवर्णस्य तु वेदाध्ययनातिरिक्तपुराणाद्यध्ययनरूपः स्वाध्यायो विधेय इति। "ब्राह्मणक्षत्रियविशां स्त्रीशूद्राणाञ्च पावनम्" इति स्मरणात्। इतरवर्णस्य योगाधिकारदर्शनात्। "स्वाध्यायाद्योगमासीत योगात् स्वाध्यायमामनेत्। स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते" इति स्मृतेः स्वाध्यायस्य योगाङ्गत्वस्वीकारात् इति वर्णाश्रमभेदात् विविधङ्कर्म्मविशेषपदघटितम्वेदितव्यम्। "ब्राह्मणोस्य मुखमासीद् बाहू राजन्यःकृतः। ऊरूतदस्य यद्वैश्यः पद्भ्याँ शूद्रोऽजायत" इति श्रवणात् "विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः" इति स्मरणाच्च ब्राह्मणक्षत्रियवैश्यशूद्रभेदाच्चातुर्वर्ण्यम्वेदितव्यम्। तत्र जन्म-भूम्यनुसारयुत्कृष्टत्वापकृष्टत्वे वेदितव्ये। तत्र "संस्काराद् द्विज उच्यते" इति स्मरणात् ब्राह्मणक्षत्रियवैश्या द्विजा उच्यन्ते "इज्याध्ययनदा-नानि विहितानि द्विजन्मनाम्। जन्मकर्म्मावदातानाङ्क्रियाश्चाश्रम-चोदिताः" इति स्मरणात् द्विजत्वविशिष्टत्रैवर्णिकस्य ब्राह्मणक्षत्रिय-वैश्यरूपस्य यजनमध्ययनं दानञ्च सामान्येन विहितम्वेदितव्यम्। "विप्रस्याध्ययनादीनि षडन्यस्याप्रतिग्रहः" इत्यादिस्मरणात् याजनम-ध्यापनम्प्रतिग्रहश्च ब्राह्मणस्यैवविधीयते; नान्ययोरिति वेदितव्यम्। ततःयजनमारभ्य प्रतिग्रहपर्य्यन्तम् षट्कर्म्माणि ब्राह्मणस्येति वेदितव्यम्। तत्र "षण्णान्तु कर्मणामस्य त्रीणि कर्म्माणि जीविका। याजना-ध्यापनेचैव विशुद्धाच्च प्रतिग्रहः" इतिस्मरणात् याजनाध्या

पनप्रतिग्रहरूपत्रीणि कर्म्माणि ब्राह्मणस्य वृत्तिकारूपाणि वेदितव्यानि। "अन्यस्याप्रतिग्रहः" इतिस्मरणात्। क्षत्रियवैश्ययोः परिग्रहोपलक्षितयाजनाध्यापनेऽपि निषिद्धे इतिवेदितव्यम्।यद्वा याजनाध्यापने आपत्सु तयोर्विधीयते परिग्रहस्तु तत्राप्यविधेय इतिवेद्यम्। "प्रतिग्रहम्मन्यमानस्तपस्तेजोयशोनुदन्। अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक् तयोः" इतिस्मृतेः। प्राजापालनेधिकृतस्य क्षत्रियस्य वृत्त्यन्तरं स्मर्य्यते "राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः" इति। अत्र आदिशब्देन दण्डशुल्कादि ज्ञातव्यम्। वैश्यशूद्रयोर्वृत्ती स्मर्य्येते। "वैश्यस्तु वार्त्तावृत्तिश्च नित्यम् ब्रह्मकुलानुगः। शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत्" इति। अत्र वार्त्ताशब्दः कृषिगोरक्षणम् वाणिज्यम् लक्षयतीति वेदितव्यम्। ब्राह्मणस्य मुख्यानुकल्पभेदेन वृत्त्यन्तराण्युच्यन्ते कृष्यादिरूपा अयाचितरूपा प्रत्यहं धान्ययाञ्चारूपा शालिक्षेत्रस्वामित्यक्तकणिशोपादनरूपशिलरूपा आपणादिपतितकणोपादनरूपोञ्छनरूपा इति। तत्र शिलोञ्छनयोरेकीकृतत्वात् शिलोञ्छनरूपा एवं वृत्तिचतुष्टम् वेदितव्यम्। आसु वृत्तिषु उत्तरोत्तरा उत्तमा वेदितव्या। यथा स्मर्य्यते "वार्त्ता विचित्रा शालीनयायावरशिलोञ्छनम्। विप्रवृत्तिश्चतुर्धेयम् श्रेयसी चोत्तरोत्तरा" आसामेव वृत्तीनाम् नामान्तराणि स्मर्य्यन्ते "ऋतमुञ्छशिलम्प्रोक्तममृतं स्यादयाचितम्। मृतन्तु नित्ययाच्ञा स्यात् प्रमृतं कर्षणं स्मृतम्। सत्यानृतन्तु वाणिज्यम् श्ववृत्तिर्नीचसेवनम्" इति चतुर्विधा विप्रवृत्तिरेषामप्यापदि अनुज्ञाप्यते। श्ववृत्तिश्च निषिद्धयते "ऋतामृताभ्यांजीवेत मृतेन प्रमृतेन वा। सत्यानृताभ्याञ्जीवेत न श्ववृत्त्याकदाचन" इत्यादिस्मृत्या नीचस्य अनापदि उत्तमवृत्तिर्न स्वीकर्त्तव्या "जघन्योनोत्तमां वृत्तिमनापदि भजेन्नरः" इतिस्मृतेः। अतः आपदि स्वीकर्त्तव्येति व्यक्तम्। अपि च उत्तमस्य आपदि नीचवृत्तिः स्वीकर्त्तव्या "सीदन् विप्रो वणिक्वृत्त्यापण्यैरेवापदन्तरेत्। खड्गेन वापदाक्रान्तो न श्ववृत्त्याकथञ्चन। वैश्यवृत्या तु राजन्यो जीवेन्मृगययापदि। चरेद्वा विप्ररूपेण न श्ववृत्या कथञ्चन। शूद्रवृत्तिम्भजेद्वैश्यः शूद्रः कारुकटक्रियाम्" इतिस्मृतेः। यद्यपि गौतमोऽनन्तराम्पापीयसीम्वृत्तिमातिष्ठेदित्युवाच खड्गधारणम् पण्यविक्रयाच्छ्रेष्ठम्मन्यते तथापि हिंसारूपत्वात् खड्गधारणस्य तस्माद्वणिक्वृत्तिरेव श्रेष्ठेति तात्पर्य्यवती सीदन्नित्यादिस्मृतिः प्रथमं वणिक्वृत्तिमुवाच। ततः पण्यम् अनयोरसम्भवे अनन्तरामपि खड्गधारणवृत्ति-

म्पश्चादुवाचेति वेद्यम्। अत्र पण्यशब्दोपादानात् पण्यविक्रयार्हन्द्रव्यम् स्वीकृत्य अपण्यम्विक्रयानर्हं सुरालवणादिनिषेधयतीति वेदितव्यम्। आपदुत्तीर्णस्तु नीचवृत्तिन्नाचरेत् "नानुकल्पेन वर्त्तेत कृच्छ्रान्मुक्तः" "नगर्ह्येण वृत्तिं लिप्सेत कर्म्मणा" इत्यादिस्मृतेः। गार्हस्थ्यब्रह्मचर्य्य वाणप्रस्थ्यसन्यासभेदादाश्रमचतुष्ठयम्वेदितव्यम् "त्रय एते पुण्यलोकभाजः एकोऽमृतत्वभाक्" इत्यादिश्रुतेः "गृहाश्रमोजघनतो ब्रह्मचर्य्यं हृदोमम वक्षः स्थानाद्वनेवासो न्यासःशीर्षणि संस्थितः" इत्यादिस्मृतेश्च। अत्रापि जन्मभूम्यनुसारिणी उत्कृष्टापकृष्टत्वे वेदितव्ये। तत्र गुरुशुषणाद्यनुकूलम् अष्टाङ्गमैथुनादिभोगराहित्यम्। वेदव्रतचारित्वम् ब्रह्मचर्य्यम्। तच्च नैष्ठिकोपकुर्व्वाणभेदेन द्विविधम्। यावज्जीवम्नैष्ठिकम्। यावदध्ययनम् गृहाश्रमावासितम् उपकुर्व्वाणम्। व्रताचारिणः ऋतौभार्य्यागमिनः गृहस्थस्यापि ब्रह्मचर्य्यं स्वीकृतम् "गृहस्थस्याप्यृतौ गन्तुः" इत्यादिस्मृतेः। ततः गार्हस्थ्यब्रह्मचर्य्यमपि तृतीयकल्पप्रविष्टम् मन्तव्यम्। धर्म्मपत्नीस्वीकरणम् पञ्चयज्ञसमाचरणं वंशरक्षणम् गार्हस्थ्यम्। वनगमनानुकूलम् वनवासित्वम् श्रद्धातपश्चरणम् वन्यवृत्ति वाणप्रस्थ्यम्। "येचेमेरण्येश्रद्धातप इत्युपासते" इतिश्रुतेः। दृढवैराग्यसम्पन्नः सर्व्वकर्म्मोपरमः मोक्षभूमिः भिक्षावृत्तिः सन्यासः। अथ परिव्राट् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्ष्याणो ब्रह्मभूयाय भवति। स च विद्वद्विविदिषाभेदेन द्विविधः। ब्रह्मज्ञानसम्पन्नः विद्वत्पदवाच्यः। ब्रह्मजिज्ञासासम्पन्नः विविदिषापदवाच्यो वेदितव्यः। क्रमाद्ब्रह्मचर्य्याद्याश्रमचतुष्टये चातुर्विध्यं स्मर्य्यते "सावित्रं प्राजापत्यञ्च ब्राह्मञ्चाथ बृहत्तथा" इतिस्मरणाच्चतुर्विधम् ब्रह्मचर्य्यम्वेद्यम्। तत्र सावित्रम् ब्रह्मचर्य्यमुपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रम्। प्राजापात्यम्। व्रतान्याचरतः साम्वत्सरम्। ब्राह्मम्वेदग्रहणान्तम्। बृहन्नैष्ठिकम् "वार्त्तासञ्चयशालीनशिलोञ्छ इति वैगृहे" इतिस्मरणात् गार्हस्थ्यम् चतुर्विधम्वेद्यम्। तत्र वार्त्ता अनिषिद्धकृष्यादिवृत्तिः। सञ्चयो याजनादिवृत्तिः। शालीनमयाचितवृत्तिः। शिलोञ्छः पतितकणिशकणवृत्तिः। एकवचनमार्षम्। यद्वा द्वन्द्वैक्ये सप्तोमी। एवम्वृत्तिभेदे सति गृहे स्थिता भवन्ति "वैखानसा वालखिल्योदुम्बराफेनपा वने" इतिस्मृतेः वाणप्रस्थञ्चतुर्विधम्। तत्र वैखानसाः अकृष्टपच्यवृत्तयः। बालखिल्याः नवेन्ने लब्धे पूर्व्वसञ्चितान्नत्यागिनः। औदुम्बराः प्रातरुत्थाय यां दिशम्प्रथमम्पश्यन्ति

तत आहृतैः फलादिभिर्जीवन्तः । फेनपाः स्वयम्पतितैः फलादिभिर्जीवन्तः "न्यासे कुटीचकः पूर्व्वम् बह्वोदो हंसनिःक्रियौ" इतिस्मृतेः सन्यासश्चतुर्विधो वेद्यः । कुटीचकः स्वाश्रमकर्म्म प्रधानः । वह्वोदः कर्म्मोपसर्ज्जनीकृत्यज्ञानप्रधानः । हंसो ज्ञानाभ्यासनिष्ठः । निःक्रियः परमहंसः प्राप्ततत्व इतिभावः । एते च सर्व्वे चतुराश्रमिणः यथोत्तरम् श्रेष्ठा वेदितव्याः । "भिक्षोर्धर्म्मः शमो हिंसा तप ईक्षावनौकसाम् । गृहिणो भूतरक्षेज्या द्विजस्याचार्य्यसेवनम्" इतिस्मृतेः । क्रमेण संक्षेपात् शमादिरूपाः संन्यासादिचतुराश्रमिणाम् धर्म्मा वेदितव्याः । तत्र ऋणत्रयापकरणादिरूपाधिकारादसति वैराग्यदार्ढ्ये क्रमादाश्रमस्वीकारः । सति तु तद्दार्ढ्ये अक्रमेणै वेति वेदितव्यम् । तथा च श्रूयते "ब्रह्मचर्य्यं समाप्यगृहीभवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् यदि वेतरथा ब्रह्मचर्य्या देव प्रव्रजेत् गृहाद्वा वनाद्वा" इति वैराग्यदार्ढ्ये न क्रमाधिकारः किन्तुसद्योऽधिकार एवेति वेदितव्यम् । तथा च श्रुतिः "यदहरेव विरजास्तदहरेव प्रव्रजेत्" इति । न चेयम् गृहीभूत्वेत्युपक्रम्य वनाद्वेत्युपसंहृता अविशेषश्रुतिः अनधिकृतानुरक्तविषया वक्तुं शक्या अविशेषश्रवणात् पृथग्विधानाच्चानधिकृतानाम् । तथा च श्रूयते "अथ पुनरेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा" इति । अत्र श्रुतौ व्रती गोदानादिवेदव्रतवान् । अव्रती तद्विपरीतः। स्नातको गुरुकुलनिवृत्तिरूपस्नानकृत् । स्नानान्तरकृदपि । गुरुशुश्रूषापरः अस्नातकःतद्विपरीतः। उत्सन्नाग्निर्मृतभार्य्यः। पूर्व्वमेवाग्निपरिग्रहरहितोऽनग्निः तद्विपरीतः परिव्रजेदिति क्रमाधिकारप्रतिपत्तिहीनानामपि सन्न्यासस्य पृथगुक्तेः न वाक्यमनधिकृतविषयमित्यर्थः । क्रमाधिकारराहित्येपि विरक्तिः सन्न्यासाकारम् प्रापयति । ततः नानुरक्तानान्तत्राधिकार इत्यवधेयम् ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यकस्य नानधिकृतविषयत्वम् । श्रवणादिद्वारासन्न्यासस्य ब्रह्मज्ञानदार्ढ्यार्थत्वम् प्रकरणादिसिद्धम् तेन समर्थस्यैवाधिकारस्तस्मिन्नित्यर्थो वेदितव्यः । ग्रन्थविस्तारभिया नातः परमधिकमाश्रमप्रकरणम्व्याख्यातुमुत्सहे । अतएतावतैवाधिकारिणोहापोहसमर्थनेन प्रकरणार्थो वेदितव्यः । एतावता क्रियमाणम् सामान्यविशेषभदात् द्विविधम्प्रतिपादितम्व्याख्यातञ्च यथाशास्त्रं यथाक्रमम् । क्रियमाणस्यैव शरीरकर्त्तव्याकर्त्तव्यताविषयरूपत्वात् सुख-

दुःखसाधनत्वात् विधिनिषेधभूमित्वाच्च यथामतिश्रीमद्गुरुवरसूत्रकारस्वरसानुसारम् प्रतिपादितमिति वेदितव्यम्। १। २। ६।

इति परमपूज्यपादश्रीमद्योगदत्तशर्म्मकृतामृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्म्मशिष्यश्रीमत्सत्यनारायणशर्म्मकृतभाष्ये प्रथमाध्यायस्य द्वितीयः पादः समाप्तः॥

एवं सूत्रकारः शरीरकर्म्मणी परिचाय्य प्रथमाध्यायस्य तृतीयपादमारभते। तत्र प्रथमाध्यायस्थप्रथमपादस्यद्वितीयसूत्रस्थसंसृतिशब्दमनुसन्दधानः तत्सम्बन्धिनम् जीवम्परिचाययति–

## जीवः संसारी १।३।१

जीवः "जीवप्राणधारणे" इति धातोरर्थानुगमात् प्राणधारी अविद्याप्रतिबिम्बितश्चित्प्रतिबिम्बः अनादिवासनावासितः आवृतस्वरूपः तत्त्वमसिवाक्यगतत्वम्पदार्थः देहमभिमन्यमानः देहीति यावत्। संसारीशब्दः इन्प्रत्ययान्तः संसारोऽस्यास्तीति संसारी पूर्व्वम् संसृतिस्वरूपप्रदर्शनावसरे जीवस्वरूपमपि प्रतिपादितमतः पिष्टपेषणवत् तत्प्रतिपादनमनपेक्षितमिति वेदितव्यम्। आवृतस्वरूपो जीवोऽभिधीयते। तदावरणप्रकारः प्रदर्श्यते। आत्मनः अखण्डत्वम् सच्चिदानन्दत्वम् स्वरूपम्प्रसिद्धम्। तत्र सत्तांशस्तु कल्पितेन जगत्पदार्थेनाविद्धो जगद्व्याप्नोतीतिभावः। कल्पितेन तुल्यरूपा सती स्फुरति यथा शुक्तीदन्ताशुक्तिगतेदमंशः रजतेन व्याप्ता रजतरूपा सती इदं रजतमिति स्फुरति चित्त्वमानन्दत्वञ्च अविद्यावृतत्वात् न भातः। यथा अज्ञानावृतत्वात् शुक्तित्वम् त्रिकोणत्वादिकम् न भाति। तत्र स्मर्य्यते "शुक्तीदन्तेव सत्ता स्फुरति समरसा कल्पितेनानुविद्धा। शुक्तित्वादीव माया वरणपरिभवाच्चित्सुखत्वेन भातः" इति। ननु आत्मनः सत्यत्वे किम्प्रमाणमिति प्रष्टव्ये प्रतिवचनम् "सत्यं ज्ञानमनन्तम्ब्रह्म" इति शब्दः सूक्ष्मत्वात् कारणत्ववत् सूक्ष्मत्वस्य तत्रैव विश्रान्तेः। पुनश्च यथा नभः मिथ्यानीलत्वाधारत्वात् सत्यम् तथायमपि जगद्भानाधिष्ठानत्वात्। पुनः परस्परव्यावृत्तसर्व्वेषु तदव्यावृतत्वात्। पुनः परस्पराश्रितसर्व्वेषु तस्य अनाश्रितत्वात् आधेयताराहित्यात्। पुनः सर्व्ववस्तुबोधतया मुनः अनवस्थाभिया यत्सर्व्वाविधिस्तदेवात्मेति तत्वात् निःसङ्गत्वाविरोधात्। पुनः सर्व्वगतत्वात्

नानित्यं सर्व्वगतम्भवतीति । पुनः कालादेः आत्मत्वात् साक्षित्वाच्च ब्रह्मान्यद्रष्टृनिषेधात् द्रष्टुरभावे जगदान्ध्यप्रसङ्गात् तत्वविदनुभवाच्च तस्य सत्यत्वम् सर्व्वथासिद्धमित्यर्थो वेदितव्यः। ननु आत्मनः चित्त्वे किम्प्रमाणमिति प्रष्टव्ये प्रतिवचनम् "चैतन्यमात्मनो रुपम्" इति शब्दः। क्वचित्स्रष्टव्यरुपकामविषयकजननसङ्कल्परूपध्यानोपदेशात् ईक्षितृत्वरूपत्वात् "तदैक्षतबहुस्याम्" इत्यादिश्रुतेः सर्व्वस्य स्वाधीनीकरणशीलत्वात् "एतस्यैवाक्षरस्य शासने" इत्यादिश्रुतेः चन्द्रसूर्य्यप्रधानकानामग्न्यादीनाम्प्रकाशनस्वभावकप्रकाशरुपत्वकथनात् । पुनः अन्यानपेक्षप्रत्यक्षरूपत्वात् सर्व्वत्राहमित्यनुभूतिप्रसिद्धेः। पुनः पापपुण्ययोः प्रेरकत्वस्य साक्षाद्द्रष्टृत्वस्य चोक्तेः "एष ह्येव साधुकर्म्म कारयति" इत्यादिश्रुतेः आत्मनि सर्व्वज्ञादिशब्दप्रसिद्धेश्च तस्य चिद्रूपत्वम् सर्व्वथासिद्धमिति वेदितव्यम्। नन्वात्मनः आनन्दत्वे किम्प्रमाणमिति प्रष्टव्ये प्रतिवचनम् "एतस्यैवानन्दभूतस्य सर्व्वाणि भूतानि मात्रामुपजीवन्ति" इति शब्दः। "स एष ब्रह्मलोके" इति सौषुप्तप्रकृतानन्दब्रह्मभावोक्तिश्रुतिश्च। मुक्तैः प्राप्यत्ववादात् न ह्यनानन्दत्वे मुमुक्षा स्यात् निरतिशयानन्दरूपत्वात् अल्पसुखत्वस्य निषेधादितिभावः। परमप्रेमास्पदत्वात् "मा नभूवं हि भूयासम्" इत्यादिश्रुतेः निधिनिलयवधूसाम्यवादात् सुषुप्तोत्थितस्य सौषुप्तसुखस्मरणात् "सुखमहमस्वाप्सम्" इत्यादिश्रुतेः। समाधौ तदनुभवाच्च "आनन्दम्ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इत्यादिश्रवणाच्च आनन्दरूपत्वम् श्रुतिस्मृतियुक्तिसिद्धमिति वेदितव्यम्। ननु अखण्डत्वे किम्प्रमाणम् "निष्कलं निष्क्रियं शान्तम् यो वै भूमा" इत्यादिश्रुतिः "अखण्डं सच्चिदानन्दरूपत्वम् ब्रह्मणि प्रसिद्धम्। तत्कथमत्र जीवस्वरूपत्वेनाभिधीयत इतिप्रष्टव्ये प्रतिवचनम्। तत्त्वमस्यादिवाक्यैर्जीवस्य ब्रह्मरूपत्वमुपपन्नमितिवेदितब्यम्। ननु तत्त्वमस्यादिवाक्यैः ब्रह्मजीवयोः सामानाधिकरण्यम् ऐक्यमितिभावः किम्विधम् तस्य बाधाध्यासविशेषणैक्यविषयरूपचातुर्विध्योपलब्धेः तत्रबाधा नाममिथ्याज्ञानस्य तात्विकज्ञानेन निवृत्तिः। यथा अन्धकारेण स्थाणौ पुरुषोयमिति मिथ्याज्ञानस्य पुरुषोयं स्थाणुरिति निश्चितज्ञानेन निवृत्तिः एतदेव बाधविषयम् स्थाणुपुरुषयोःसामानाधिकरण्यम्। शुक्ताविदम् रजतमिति अध्यासविषयकम् द्वितीयम्।

दण्डीपुरुष इत्यादिविशेषणविषयम् तृतीयम्। प्रकृष्टप्रकाशश्चन्द्रः सोयन्देवदत्त इत्याद्यैकविषयञ्चतुर्थम्। सामानाधिकारण्यम् वेदितव्यम्। इह आद्यम् बाधविषयम् न सम्भवति यतः मोक्षोपायोद्यमा श्रुतिः। ब्रह्मणोबाधे मोक्षस्यैव बाधात् जीवबाधे मुमुक्षवभावेनापि मोक्ष बाधात् निरर्थकोद्यमा स्यात्। न पुनः द्वितीयम् अध्यासविषयम् सम्भवति मनोब्रह्मेत्युपासीतवत् ब्रह्मत्वध्यानादिविधेरश्रवणात् सत्यपि क्वचिच्छवणे अनित्यफलतादोषापत्तेर्न सम्भवति। ध्यानञ्च मानसीक्रिया सा चानित्यफलकेति। पुनः तृतीयम् विशेषणविषयम् न सम्भवति। तयोस्तत्त्वम्पदार्थयोर्विरुद्धयोर्विशेष्यविशेषणभावायोगात्। अतः परिशेषात् एकवस्तुविषयकसामानाधिकरण्यपक्षस्यात्र स्थितिरूपपन्नेतिवेदितव्यम्। ननु तत्त्वम्पदयोर्वाच्योऽर्थः ऐक्यरूपः असङ्गतः तत्त्वम्पदार्थयोः परोक्षापरोक्षादिरूपविरुद्धधर्म्मयुजोरैक्यायोगात्। तत्रोच्यते भवति सङ्गतिरैक्यस्य लक्षणाया अत्र यष्टिपदस्य यष्टिधर इव जहत्स्वार्थलक्षणा न सम्भवति। ब्रह्मजीवयोः यष्टियष्टिधरयोरिव परस्परार्थयुक्तत्वायोगात्। तथाहि जगत्कारणत्वरूपतत्पदार्थविशिष्टे जीवे जगत्कारणत्ववाँस्त्वमिति वाक्यार्थः स्यात्। एवं त्वम्पदार्थविशिष्टतत्पदार्थब्रह्मण्यपि वेदितव्यम्। न चैवं सम्भवति एतादृशोपदेशस्य मोक्षे उपयोगायोगात्। तत्र तत्र श्रुतौ उपक्रमसङ्गत्यादेश्चायोगात्। नच गङ्गायाङ्घोष इतिवाक्येन अन्वययोग्यम् गङ्गार्थप्रवाहयोगितृतीयपदार्थतीरमिवेह महावाक्ये अन्वययोग्यमन्यतरपदार्थसङ्गितृतीयम्वस्तु किमपि प्रसिद्धन्ततोन सम्भवत्यत्र अजहत्स्वार्थलक्षणेतिवेदितव्यम्। न च तत्त्वम्पदयोर्मध्ये कस्यचिदेकपदस्य जहदजहत्स्वार्थरूपनिश्चयविनिगमकम् किञ्चिल्लिङ्गम्विद्यते नवा उपपद्यतेपि लक्षणद्वयम् निर्विशेषाखण्डवाक्यार्थतात्पर्य्यस्य निर्णितस्य विरोधप्रसङ्गात्। नन्वस्तुतत्पदम् गौण्या वृत्त्या तत्सदृशपरम् तथा च ब्रह्मसदृशोऽसि त्वमितिवाक्यार्थः सङ्गच्छताम् तदपि न सम्भवति अस्यजीवस्य परोपमम् प्रसिद्धरूपं स्यादित्यपि न सम्भवति यतः भविष्यत्कालं स्पृशन्ती अस्तिता वर्त्तमानता न सम्भवति अत्र तत्त्वमसीतिवाक्ये वर्त्तमानत्वार्थकासिपदस्य विद्यमानत्वात् अप्रमाणबलिता च वर्त्तमानत्यागपूर्व्वकभविष्यत्स्वीकृतिर्नोपपद्यते ततोऽत्र जीवब्रह्मणरैक्यप्रतिपादनाय भागलक्षणायुक्तेतिवेदितव्यम्। सोयं देवदत्त इतिवाक्ये तदिदम्पदार्थयोः भेदे प्रतीते विरुद्धम् तत्त-

देशकालादिविशेषणमुपेक्ष्य देवदत्तव्यक्तिमात्रम्पदाभ्यां संलक्ष्य तद्रूपवाक्यार्थेऽभिन्ने वाक्यात्मकतदिदम्पदद्वयम् बोधकतया नीयते तथा तत्त्वम्पदार्थयोर्निश्चिताभेदविरोधिनम् मायाऽविद्याकृतसर्व्वज्ञत्वाल्पज्ञत्वादिधर्म्मसमूहमपहाय शरीरबुद्धिसाक्षिचिन्मात्रम्भागं त्वम्पदेन सदपरिच्छिन्नचिन्मात्रभागं तत्पदेन उपलक्ष्य अनन्तरम् लक्षितैकचिन्मात्राखण्डवाक्यार्थविषये वाक्यात्मकतत्त्वम्पदद्वयम् घटयेत् । तथा च स्मर्य्यते"एकात्मकत्वाज्जहती न सम्भवेत्तथा जहल्लक्षणता विरोधतः । सोयम्पदार्थाविवभागलक्षणा युज्येत तत्त्वम्पदयोरदोषतः" इति। ननु तत्त्वम्पदार्थयोरेकार्थत्वे तत्त्वम्पदयोरन्यतरस्य वैयर्थ्यं कथन्न स्यादत्रोच्यते तत्पदलक्ष्ये श्रोतुरुपस्थिताम् परोक्षत्वालब्धत्वबुद्धिनिहन्तुं त्वम्पदमपेक्ष्यते। त्वम्पदलक्ष्यन्त्वात्मरूपत्वात्। सदैवापरोक्षम् लब्धञ्च । एवं त्वम्पदलक्ष्ये प्रतीतमपूर्णत्वदुःखित्वरूपभ्रमन्निहन्तुन्तत्पदमपेक्ष्यते। तत्पदलक्ष्यञ्च पूर्णमदुःखम् सुखरूपमित्यर्थः प्रसिद्धएव। "योवै भूमा तत्सुखम्" इत्यादिश्रुतेः। तथाच परस्परलक्ष्याभेदनिगमनाय अत एवालौकिकस्वात्मतत्त्वञ्चावगमयितुन्तत्त्वम्पदे परस्परं सापेक्ष्ये वेदितव्ये। अतस्तयोरन्यतरस्य न वैयर्थ्यमितिभावः। ननु सच्चिदानन्दरूपविशेषणत्रयवैशिष्ट्यादात्मनः असदचिदनानन्दत्वरूपत्रैविध्यप्रतियोगित्वादखण्डत्वं न सम्भवति। तत्रोच्यते अत्र पदानामखण्डार्थकत्वं सर्व्वथान्यसंसर्गशून्यनित्यवस्त्वर्थकत्वम्। अथवा जातिगुणाद्यन्याघटितवस्त्वर्थकत्वञ्चापि वेदितव्यम्। यतः उक्तविधाखण्डार्थता प्रकृष्टः प्रकाशः चन्द्रः इत्यादिवाक्ये प्रश्नप्रतिवचनानुरोधेन चन्द्रमात्रप्रबोधात् प्रसिद्धा उक्तवाक्यस्य चन्द्रमात्रबोधकत्वम् प्रतिपाद्यते। प्रकृष्टः प्रकाशः चन्द्रः इतिवाक्यस्य पदत्रयप्रवृत्तिनिमित्तानाम्प्रकर्षकत्वप्रकाशत्वचन्द्रत्वानाञ्चन्द्रे योगः उक्तधर्म्मान्यधर्म्माणाम्व्यवच्छेदश्च तथा चन्द्रनिष्ठोन्यभेदश्च न पृष्टःअपृष्टार्थे शाब्दवोधो न युज्यते तस्मादुक्तवाक्याच्चन्द्रमात्रस्यैव बोध इतिवेदितव्यम्। प्रकृष्टनिकृष्टादिज्योतिस्समूहमालोक्यात्र कश्चन्द्र इति प्रश्ने चन्द्रव्यक्तिमात्रम् ज्ञातुमिष्टम्भाति। अतस्तदेव प्रश्नविषयः इतिप्रश्नविषयमाकलय्य जिज्ञासानिवृत्तये जिज्ञास्यमात्रबोधनतात्पर्य्येण प्रवृत्तोत्तरयितृवाक्येनापि प्रश्नविषयविषयकेनैव भाव्यमितिभावः। सच्चिदानन्दानामनेकत्वेऽपि "सच्चिदानन्दात्मानमद्वितीयम्ब्रह्म भावयेत्"इत्यादिवाक्येन बोध्यबोधनरूपव्यवहारविषये सत्त्वचित्त्वानन्दत्वरूपकल्पना आत्मनो मिथ्याजड़-

महादुःखरूपमोहादन्यस्वभावत्वद्योतनार्थं नतु मिथ्यात्वादि प्रतियोगित्वदर्शनायैव केवलमितिभावः। अपिच सच्चिदानन्देतिनिरूक्तवाक्ये अद्वितीयमितिशब्दः ब्रह्मण अद्वयत्वम् नामाखण्डत्वम्बोधयतितीवेदितव्यम्। १। ३। १।

प्रथमाध्यायस्थप्रथमपादस्थपञ्चमसूत्रस्थेश्वरशब्दमनुसन्दधानः श्रीमान्सूत्रकारः ईश्वरम्विशिनष्टि विशेषणद्वयेन वक्ष्यमाणसूत्रस्थेन॥

## सर्व्वशक्तिमदनादिरीश्वरः।१।३।२।

ईश्वरः मायाप्रतिबिम्बितश्चित्प्रविविम्बः अनावृतस्वरूपः अणिमाद्यैश्वर्य्यसम्पन्नः षड्विधैश्वर्य्यसम्मपन्नो वा स्टष्टिस्थित्यन्तकारिमायाशवलितम्ब्रह्मेतिशास्त्रप्रसिद्धः। प्रतिपादितञ्च ईश्वरस्वरूपम् संसृतिस्वरूपप्रदशनावसरे पूर्व्वमेवातः तत्स्वरूपप्रदर्शनमत्रपिष्टपेषणवदनपेक्षितमिति न व्याख्यातङ्केवलम् सूत्रकारसूत्रितमीश्वरपरिचायकम् विशेषणद्वयम् व्यख्यायते। ईश्वरः कथम्भूतः सर्व्वशक्तिमत् विभक्तयभावोसमासात् सर्व्वशक्तिमानित्यर्थः सकलसामर्थ्यशालीति यावत्। मतुप्प्रत्ययान्तोयं शब्दः "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "सर्व्वज्ञं सर्व्वशक्ति महामायञ्च ब्रह्म" इत्यादिश्रतेः। यद्वा सर्व्वेषाम्प्राणिनाम् याः शक्तयस्तद्वान्। तथाहि श्रावयति श्रुतिः सर्व्वशक्तियोगमीश्वरस्य "सर्वकर्म्मा सर्व्वकामः सर्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोवाक्यनादरः सत्यकामः सत्यसङ्कल्पः सर्व्वविदेतस्य वा अक्षरस्य प्रशासने सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्येवञ्जातीयका। तथा च स्मर्य्यतेऽपि "बुद्धिर्ज्ञानमसम्मोह" इत्युपक्रम्य "भवन्ति भावा भूतानाम्मत्त एव वृथग्विधाः" इत्यन्तम्। न स्यादेतत् विकरणम् परमेश्वरम् शास्ति शास्त्रम् "अचक्षुष्कमश्रोत्रमवाङ्मनाः" इत्येवञ्जातीयकम्। कथं स सर्व्वशक्तिमानपि सन्कार्य्याय प्रभवेन्निरिन्द्रियःदेवादयोहि शक्तिमन्त इन्द्रियादिसम्पन्नाएव स्वस्वकार्य्यसम्पादनाय प्रभवन्तो विज्ञायन्ते। कथञ्च नेतिनेतीतिप्रितिषिद्धसर्व्वविशेषस्य ईश्वरस्य सर्व्वशक्तिमत्ता सम्भवेदिति। अत्राच्यते श्रुत्यवगाह्य एवायमतिगम्भीर ईश्वरः न कपोलकल्पनावगाह्यः। न च यथैकस्य शक्तिर्दृष्टा तथेतरस्याऽपि शक्त्या भवितव्यमिति नियम उपलभ्यते। प्रतिषिद्धसर्व्वविशेषस्यापीश्वरस्य सर्व्वशक्तिमत्ता

सम्भवति। अविद्याकल्पितम् जैवम् सर्व्वसामर्थ्यम् वस्तुत ईश्वरसामर्थ्यमेवेतिवेदितव्यम्। तथा च श्रुतिः "अपाणिपादोजवनोग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्येवञ्जातीयका। तथा च स्मृतिः "न चास्य कश्चिन्निपुणेन धातोरवैति जन्तुः कुमनीष ऊतीः" इत्येवञ्जातीयका। अकरणस्यापीश्वरस्य सर्व्वशक्तिमत्तां दर्शयति। ननु नहि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्त्तत इति शास्त्रकाराभ्युपगमात् तथा लोके व्यवहाराच्च। लोके प्रवर्त्तमानः पुरुषः न मन्दोऽपि कामपि तावत्प्रवृत्तिमात्मप्रयोजनाऽनुपयोग्यामारभमाणोदृष्टः किमुत गुरुतरसंरम्भाम्। भवति च तथा लौकिकव्यवहारयोषिणी श्रुतिः "न वारे सर्व्वस्य कामाय सर्व्वम्प्रियम्भवति आत्मनस्तु कामाय सर्वं प्रियम्भवति" इति गुरुतरसंरम्भा चेयमीश्व-प्रवृत्तिः उच्चावचप्रपञ्चम्ब्रह्माण्डम् विरचयितव्यम् स्थापयितव्यम् क्षपयितव्यञ्च यदीयमपि प्रवृत्तिरीश्वरस्य आत्मप्रयोजन पयोग्या परिकल्पेत नित्यतृप्तत्वमीश्वरस्य "नित्यतृप्तोनिराश्रयः" इत्याद्यागमसिद्धम् बाध्येत। या लोकप्रवृत्तिः सा स्वफलार्था इतिप्रसिद्धिः। न च दयालुप्रवृत्तावतिव्याप्तिः तत्रापि परदुःखासहनजन्यस्वात्मवैकल्यनिवृत्यर्थित्वात् प्रयोजनाभावे प्रवृत्यभावोऽपि सम्भति। अथ बुद्ध्यपराधादुन्मत्तवत् आत्मप्रयोजनमन्तरापि प्रवर्त्तेत। तथासति श्रूयमाणं स्मर्य्यमाणञ्च सर्व्वज्ञत्वमीश्वरस्य व्याहन्येत। तस्मादसम्बद्धा जगज्जन्मस्थितिभङ्गानुकुला प्रवृत्तिरीश्वरस्येति। तत्रोच्यते यथा लोके कस्यचिन्निवृत्ततर्षस्य प्राप्तैषणस्य राजपरिवृढस्य तत्सचिवस्य वा प्रयोजनमन्तरेणैव कामनानभिसन्धौ लीलारूपाः प्रवृत्तयः खेलविहारेषु भवन्ति। कदाचिद्राजादीनाम् लीलाया अपि किञ्चिप्रयोजनम् सुखोल्लासादिकम् सम्भाव्येत। ततोदृष्टान्तान्तरन्दीयते। यथा च उच्छ्वासप्रश्वसयोः प्रयोजनमन्तरैव स्वभावादेव प्रवृत्तिरेवमीश्वरस्याप्यनपेक्ष्य किञ्चित्प्रयोजनम् स्वभावादेव लीलारूपा प्रवृत्तिरुपपद्यत इतिवेदितव्यम्। यथा प्राणस्य स्वभावश्चलनम्। प्रारब्धम् उच्छ्वासादिनिमित्तं स्यादेवमीश्वरस्यापि कालकर्म्मसहिता माया प्रकृतिपदवाच्या स्वाभावोऽस्त्येव। एवम्व्याख्यानमनवद्यम्वेदितव्यम्। ननु "प्रकृतिं यान्ति भूतानि निग्रहः किङ्करिष्यति" इति स्मरणात् प्रकृतमतः प्रकृत्यधीनत्वोपपत्तावीश्वरस्यापि प्रकृतिमत्वे स्वभाववत्त्वम् इतियावत् प्रकृत्यधीनत्वम् मायापारवश्यम्प्रसज्येत। ततः अनैश्वर्य्यमापद्येत इति। तत्रोच्यते आविद्यकस्य जीवस्यैव तत्तारतम्यम्प्रकृतिपराधीनत्वमि-

त्यर्थः। न तु ईश्वरस्य मायिकत्वेऽपि मायारूपस्वभावत्वेऽपीतियावत् तत्पारतन्त्र्यमितिवेदितव्यम्। तथाचोक्तिः "अविद्यावशगोजीवस्तद्वैचित्र्यादनेकधा। मायाबिम्बोवशीकृत्य तां स्यात्सर्व्वज्ञ ईश्वरः" अत्र वाक्ये वशीकृत्यतामितिशब्देन मायाया एव ईश्वरपारवश्यम् माया ईश्वरपराधीनेतियावत् प्रतिपाद्यते। तथा सति कैमुतन्यायेन नेश्वरो मायापराधीन इतिवेदितव्यम्। एवमीश्वरस्य जगत्कारणत्वसिद्धौ निमित्तत्वोपादानत्वभेदात् कारणद्वैविध्यप्रसिद्धौ किमीश्वरोनिमित्तकारणमुतोपादानकारणमाहास्विदुभयविधकारणमिति। नाद्यः वक्ष्यमाणप्रकारेण तदनुपपत्तेः निमित्तकारणमात्रेश्वरकल्पना वेदान्तिकसमयप्रतिपक्षिणी वेदितव्या। केचित्सेश्वराः,प्रधानपुरुषयोरधिष्ठातारम् केवलम् निमित्तकारणमीश्वरङ्कल्पयन्ति। इतरेतरविलक्षणान् प्रधानपुरुषेश्वरांश्चाभ्युपगच्छन्ति। माहेश्वरास्तु शैवपाशुपतकारुणिकसिद्धान्तिकापालिकभेदाच्चतुर्विधाः। कार्य्यकारणयोगविधिदुःखान्तान् पशुपतिनेश्वरेण पशुपाशविमोक्षणाय जीवबन्धनाशयेतियावदुपदिष्टान् महदादिकप्रधानसमाधित्रिषवणस्नानादि मोक्षस्वरूपान् पञ्चपदार्थान् मन्यन्ते। पशुपतिमीश्वरंनिमित्तकारणम्वर्णयन्ति। सकर्तृकम् कार्य्यत्वात् घटादिवत् घटनिमित्तकारणकुलालवज्जगन्निमित्तकारणेश्वरेण भवतिव्यञ्चेति वैशेषिका मन्यन्ते। कर्म्मफलम् सपरिकराभिज्ञदातृकङ्कालान्तरभाविफलत्वात् सेवाफलवदितिगौतमा दिगम्बराश्च मन्यन्ते। कर्त्तारमीश्वरं निमित्तकारणम्प्रसाधयन्ति। तत्र तार्किकोक्तिर्नसम्भवति "अधिष्ठानानुपपत्तेश्च" इतिब्रह्मसूत्रात् तार्किकपरिकल्पितनिमित्तकारणरूपेश्वरो नोपपद्यते।साधिष्ठान एवलोके शरीरी राजा भूमीश्वरो दृश्यते।न निरधिष्ठानोऽशरीरी अतश्च दार्ष्टान्तिकस्य दृष्ठान्तराजसदृशस्यादृष्टस्येश्वरस्यापि किञ्चिच्छरीरं तार्किकैर्वर्णयितव्यं स्यात्।नच तद्वर्णनमुपपद्यते शरीरस्य जगदुत्पत्त्युत्तरकालावस्थायित्वात् प्राक् जगदुत्पत्तेस्तदसम्भवात् निरधिष्ठानत्वेऽशरीरत्व इति यावत्। ईश्वरस्य निमित्तकारणरूपस्य प्रवर्त्तकत्वं न सम्भवति। लोक एवं दृष्टत्वादथलौकिकदृष्टान्तानुसारादीश्वरस्य शरीरकल्पनायां सत्यामीश्वरस्यापि शरीरित्वे सिद्धे संसारिवद्भोगः प्रसज्येत। ततश्च भोगस्य वासनायोनित्वात् वासनायाश्च कर्म्मयोनित्वात् कर्म्मणश्च भोगहेतुत्वात् तस्य सवासनत्वकर्तृत्वभोक्तृत्वरूपचक्रप्रवाहपातित्वादनैश्वर्य्यमुपपद्येत। एवमन्यास्वपि वेदान्तसमयप्रतिपक्षिणीष्वीश्वरकल्पनासु अवैदिकत्वाल्लौकिकदृ-

दृष्टान्तपारवश्यसामन्यादियमनुपपत्तिर्योजयितव्येतिवेदितव्यम्।नद्वितीयः तथा सति घटाद्युपादानीभूतमृत्तिकादिवदीश्वरस्यापि जगदुपादानीभूतस्य परिणामविकारः प्रसज्येत। श्रूयमाणं स्मर्य्यमाणञ्च तस्य निर्विकारित्वम्बाध्येत। न तृतीयस्तदनुपपत्तेः अनुपपत्तिश्च प्रदर्श्यते निमित्तोपादानकारणरूपमीश्वरम्भागवता पाञ्चरात्रा मन्यन्ते। तेषामयं समयः भगवानेवैकोवासुदेवः शुद्धचित्स्वरूपः परमार्थतत्वम् स स्वात्मानञ्चतुर्धा विभज्य वासुदेवव्यूहरूपेण सङ्कर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च प्रतितिष्ठति। तत्र वासुदेवः परमात्मा। सङ्कर्षणोजीवः।प्रद्युम्नोमनः।अनिरुद्धोऽहंकारः। तेषाम्वासुदेवः पराप्रकृतिः। तदन्ये सङ्कर्षणादयः कार्य्यम्। तमेवं रूपमीश्वरमभिगमनोपादानेज्यास्वाध्याययोगैः देवताभिगमनपूजाद्रव्योपार्ज्जनाष्टाक्षरजपध्यानैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति। तत्र भगवतोऽनेकधा स्वात्मव्यूहनानुकूलावस्थितिर्न विरूध्यते "स एकधा भवति त्रिधा भवति" इत्यादिश्रुतेः भगवतोऽभिगमनादिरूपमाराधनमपि न निषिध्यते "श्रद्धावित्वोभूत्वा" तं यथा यथोपासते' इत्यादिश्रुतेः "मत्कर्म्मकृत्मत्परमः" इत्यादिस्मृतेश्च ईश्वरप्रणिधानस्य प्रसिद्धत्वात्। यच्चोच्यते वासुदेवात्सङ्कर्षणोजायते सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इति।तन्निराकरणीयम् वासदेवाख्यपरमात्मनःसङ्कर्षणाख्यजीवोत्पत्त्यनुपपत्तेः।जावोत्पत्तिस्वीकारे जीवस्यानित्यत्वादिदोषप्रसङ्गात् निर्मोक्षप्रसङ्गाच्च तस्मादसङ्गतैषा एकस्यैवेश्वरस्य जनकजन्यत्वस्वीकारात् निमित्तोपदानकारणरूपेश्वरकल्पनेतिवेदितव्यम्। लोके कर्त्तुर्देवदत्तादेः करणस्य परश्वादेः अनुत्पत्तिदर्शनात् वैष्णवसमये जीवरूपसङ्कर्षणात् करणात्मकमनोरूपप्रद्युम्नसृष्टिरनुपपन्नेति ज्ञानैश्वर्य्यादिसाम्यस्वीकारात्। वासुदेवादीनास्परस्परानतिशयवत्वे कार्य्यकारणभावोनोपपन्नः। मृद्घटादिकारणकार्य्ययोः परस्परातिशयित्वदर्शनात्। इत्यादिदोषावली ग्रन्थविस्तारभिया नोद्घाटितेतिवेदितव्यम्। एवम् कोटित्रयनिरासाच्चतुर्थकाट्यभावाच्चेश्वरस्य कारणत्वमेव निरस्तं स्यात्तच्च न सम्भवति जगत्कार्य्यम्प्रति कारणत्वेनेश्वरस्य स्वीकारादास्तिकसमयैः। "यतोवा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्" इत्यादिस्मृतेश्च तस्माद्भवितव्यमेव जगत्कारणरूपेणेश्वरेणेतिसिद्धम्। कारणत्वञ्च वेदान्तसामयिकमभ्युपगन्तव्यम्। निमित्तोपादानरूपमुभयवि-

धम्वेदितव्यम् । तन्तुवागुरासृष्टौ यथोर्णनाभेर्निमित्तत्वमुपादानत्वञ्च लोकप्रत्यक्षसिद्धम् तद्वत् । नन्वीश्वरत्वेन प्रसिद्धानां भूमिपाललोकपालादीनां निमित्तत्वमेव परम्प्रतीयते। तद्वत् परमेश्वरस्यापि निमित्तकारणत्वमेव प्रतिपत्तव्यम्भवत्यपिच कार्य्यं जगदिदम् सावयवमचेतनमशुद्धम् दृश्यते। तथा सतीश्वरस्योपादानत्वस्वीकृतावीश्वरेणाऽपि जगत्सदृशेनैव भवितव्यम् । घटमृदादिकार्य्यकारणयोः सादृश्यदर्शनात् । ईश्वरस्य जगत्सादृश्यस्वीकृतौ "निष्कलम् निष्क्रियम् शान्तमनिरवद्यन्निरञ्जनम्" इत्यादीश्वररूपाभिधायिनी श्रुतिर्विरुध्येत। निरुक्तश्रुत्यनुरोधादीश्वरस्य निमित्तमात्रत्वं स्वीकृतं स्यादुपादानन्तु ईश्वरादन्यदचेतनत्वादिगुणकम् स्मृतिप्रसिद्धम् किञ्चित्प्रधानादि स्वीकर्त्तव्यमितिचेन्न । उपादानकारणगोचरस्यैव दृष्टान्तस्य श्रुतावुपलब्धेः। यथा "सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्व्वम्मृण्मयम्विज्ञातं स्यात् वाचारम्भणम्विकारानामधेयम् मृत्तिकेत्येवसत्यम्" इत्यादि । अपिच एवम्भूताया एव प्रतिज्ञायाः श्रुतौ दर्शनात् । "उततमादेशमप्राक्षो येनाश्रुतं श्रुतम्भवत्यमतम्मतमविज्ञातम् विज्ञाताम्" इत्यादि तत्र एक विज्ञाने नस र्वान्यविज्ञानम् ब्रह्मविज्ञानेन जगद्विज्ञानमिति यावत् प्रतीयते । तच्चोपादानत्व एवोपपद्यते । कार्य्यस्योपादानकारणाव्यतिरेकात् निमित्तत्वे तु कार्य्यकारणाव्यतिरेकः कुम्भव्यतिरेकिकुलालदर्शनान्नोपपद्यते इति "यतो वा इमानि भूतानि जायन्ते" इत्यत्र श्रुतौ जनिकर्त्तुः प्रकृतिरितिपाणिनेः प्रकृतिलक्षणैवोपादानलक्षणेतियावत् पञ्चमी द्रष्टव्या निमित्तत्वन्त्वधिष्ठात्रन्तराभावात् प्राक् सृष्टेः "सदेवसौम्येदमग्रआसित्" "एकमेवाद्वितीयम्" श्रुतावित्याद्यवधारणाच्च वेदितव्यम् । यथा लौकिकम् कुलालादिनिमित्तकारणम् स्वातिरिक्तम्मृदाद्युपादानमादाय प्रवर्त्तते नैवमीश्वरः स्वातिरिक्तङ्किञ्चिदन्यमादत्ते· यद्यप्यविद्याग्रहणम् " मायामादाय तामसीम् " इत्यादिवाक्यात् स्वीक्रियते। तथापि चन्द्रचन्द्रिकयोरिव शक्तिशक्तिमतोरभेदान्मायाया ईवरादभिन्नत्वस्वीकारात् ईश्वरसत्तयैव तस्याः सत्त्वात् । स्वयम सत्त्वाच्च अविद्यायाः नेश्वरादन्यद्वस्तु सत्त्वमुपपाद्यमिति वेदितव्यम्। ततश्च न प्रतिज्ञाव्याहतिरिति वेदितव्यम् । अधिष्ठातरि निमित्त इतियावत् । उपादानादन्यस्मिन् स्वीकृते एकविज्ञानेन सर्वविज्ञानं न सम्भवति । तथा सति श्रौतदृष्टान्तस्य श्रौत प्रतिज्ञायाश्च उपरोधः प्रसज्येत । तस्माद्युक्तमीश्वरस्यनिमित्तत्वमुपादानत्वञ्च । स्वानति·

रिक्तमायास्वीकारात्ईश्वरस्य वेदान्तसम्मतविवर्त्तोपादानत्वम्व्यक्तम्। निराकृतञ्चपरिणाम्युपादानत्वमित्यवधेयम् । अत्र विवर्त्तोपादानत्वमेवोपादानस्थानीयम्वेदितव्यम्।तथा न कश्चिद्विरोधइतिवेदितव्यम् पुनः स ईश्वरः किंलक्षणविशिष्टः अनादिः आप्रथमम् दीयते गृह्यते इति आदिः"पुंस्यादिः पूर्व्वपौरस्त्यप्रथमाद्या अथा स्त्रियाम्" इतिकोशात्। न आदिर्यस्येत्यनादिः अजन्मा इत्यर्थः। तथा च श्रूयते "स वा एष महानज आत्माऽजड़ोऽमरोऽमृतोऽभयोब्रह्म"इत्यादि। स्मर्य्यते च "अजोनित्यः साश्वतोयम्पुराणः"इत्यादि।"ऊर्ध्वमूलमधःशाखमश्वत्थम्प्राहुरव्ययम्" इतिभगवद्वाक्यात्।प्रवाहरूपेण संसारस्याव्ययत्वसिद्धावनादित्वसिद्धिः "न रूपमस्येह तथोपलभ्यते नान्तोन चादिर्न च सम्प्रतिष्ठा।" इत्यादिस्मृत्या च जगदनादित्वम् साक्षादभिधीयते । ततश्च तद्धतोरीश्वरस्याप्यनादित्वमुपपन्नमेवेतिसिद्धम् । ईश्वरस्यादिमत्त्वे जन्यत्वसिद्धौ "न तस्य कश्चिज्जनिता न चाधिपः"इत्यादिश्रुतिर्बाध्येत । तस्मात्सिद्धमीश्वरोनादिरिति "योमामजमनादिञ्च वेत्ति लोकमहेश्वरम्। असम्मूढः स मर्त्त्येषु सर्व्वपापैः प्रमुच्यते" इतिभगवद्वाक्यमपि ईश्वरस्यानादित्वमुद्घोषयतीतिवेद्यम् । अत एव भगवत्युपात्तपूर्व्वोक्तजगत्सादृश्यप्रसङ्गोपि निरस्त इतिवेदितव्यम् ॥ १ । ३ । २ ॥

श्रीमान् सूत्रकारः प्रथमाध्यायस्थप्रथमपादस्थषष्ठसूत्रस्थब्रह्मशब्दमनुसन्दधानोऽग्रिमसूत्रमारभमाणो ब्रह्म विशिनष्टि ॥

## शुद्धचैतन्यं नित्यं ब्रह्म १।३।३॥

ब्रह्मस्वरूपं प्रथमाध्यायस्थप्रथमपादस्थतृतीयसूत्रस्थस्वरूपशब्दव्युत्पादनावसरे व्युत्पादितमेवातोऽत्र न पुनर्व्युत्पाद्यते । पिष्टपेषणन्यायादनपेक्षितत्वात्।केवलम् सूत्रकारसूत्रितम् तद्विशेषणद्वयमेव व्याख्यायते। ब्रह्म बृहतेर्धातोरर्थानुगमात्।बृंहणस्वभावम् व्यापकमितियावत्। किंलक्षणविशिष्टं शुद्धचैतन्यम् निर्गुणचेतनभावः।यद्वा तत्त्वमसीतिवाक्ये तत्त्वम्पदार्थयोः परोक्षापरोक्षत्वादिविरुद्धधर्म्मांशत्यागेन भागलक्षणया परिशोधितमविरुद्धधर्म्मांशरूपचैतन्यम् श्रावयति च श्रुतिः। ब्रह्मणश्चैतन्यरूपत्वम्"विज्ञानमानन्दम्ब्रह्म""सत्यं ज्ञानमनन्तम्ब्रह्म" "अनन्तरोऽबाह्यःकृत्स्नः प्रज्ञानघनः" इत्येवं जातीयका जीवस्य आविद्यकत्वात् ईश्वरस्य च मायिकत्वात् तयोर्यथाक्रममविद्यायाम्मायायाञ्च प्रतिविम्बितत्वादित्यर्थः। जीवस्यावृतिशक्तिमत्वात् ईश्वरविक्षे-

प्रशक्तिमत्वादशुद्धत्वम् व्यक्तम्। ब्रह्मणश्चासङ्गत्वात् ताभ्याम्विलक्षणो धर्म्मः शुद्धत्वमित्यर्थः। तथाच स्मर्य्यते "ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता। जाग्रदादिविमोक्षान्तः संसारोजीवकल्पितः। अद्वितीयम्ब्रह्मतत्वमसङ्गन्तन्नजानते। जीवेशयोर्मायिकयोर्वृथैव कलहं ययुः" इत्यादि तथा ब्रह्मणः शुद्धिं श्रुतिरपि श्रावयति "शुद्धोऽबाध्यःस्वरूपो बुद्धःसुखस्वरूपः" इत्येवं जातीयका अत्र श्रुतावबाध्यस्वरूप इतिशब्दाद्ब्रह्मणोऽनध्यस्तत्वम् शुद्धस्य बिम्बरूपस्य हेतुगर्भविशेषणत्वम् वेदितव्यम्। ततश्चजीवेश्वरयोरध्यस्तत्वम् व्यज्यते। ततोऽशुद्धत्वञ्चोपपद्यत इतिवेदितव्यम्। पुनस्तद्ब्रह्म किं लक्षणविशिष्टम् नित्यम्कालत्रयानपायि सर्व्वदास्थितिशीलमित्यर्थः। इदन्नित्यशब्दरूपविशेषणम् ब्रह्मणः काणभुजानामिवागन्तुकचैतन्यरूपत्वम्व्यावर्त्तयति। साङ्ख्यानामिव नित्यचैतन्यस्वरूपत्वमनुवर्त्तयतीतिवेदितव्यम्। वेदान्तिनां साङ्ख्यानाञ्च चैतन्यनित्यत्वाभ्युपगमे न काचिद्विप्रतिपत्तिर्वेदितव्या। आत्ममनःसंयोगजमग्निघटसंयोगजलोहितादिगुणवत् आगन्तुकचैतन्यं वेदितव्यम्। काणादानाम् तैरभिधीयते दृश्यते सुप्तिमूर्छितग्रहाविष्टानान्तासु सुप्त्याद्यवस्थासु चैतन्याभावस्ते च परिपृष्टा न वयम् किञ्चिच्चेतयामहे इतिजल्पन्ति। स्वस्थाश्च चेतयमाना दृश्यन्तेऽतश्चैन्यस्य कादाचित्कत्वदर्शनात् भवितव्यम्ब्रह्मणाऽऽगन्तुकचैतत्येनेतिप्राप्ते काणभुजि समये निर्णीयते। ब्रह्म नित्यचैतन्यमेवोपाधिसम्पृक्तञ्जीवभावेनावतिष्ठते "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादिश्रुतेः। स च जीवोनित्यचैतन्योभवितुमर्हति "असुप्तः सुप्तानभिचाकसीति" "अयम्पुरुषः स्वयज्ज्योतिर्भवति" "नहि विज्ञातुर्विज्ञप्तेर्विपरिलोपोविद्यते" इत्यादिश्रुतेः। यत्तु सुप्तमूर्च्छितग्रहाविष्टा न चेतयन्त इत्यभिहित आगन्तुकचैतन्यरूपत्वे हेतुः सच श्रुत्यैव परिह्वियते। सुषुप्तम्प्रकृत्य "यद्वैतन्न पश्यति पश्यद्वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोन्यद्विभक्तम् यत्पश्येत्" इत्येवं जातीयकया एवम् श्रुतिबलादुपपद्यते। विषयाभावादिदमचेतयमानत्वम् न चैतन्याभावादिति यथा चान्द्रप्रातिबिम्ब्यानुकूलजलाभावे शैवालादिव्यवधानात्। प्रतिबिम्बाभावः। नच चन्द्रस्वरूपबिम्बाभावात् तद्वदेवम् काणभुजी सम्मतिः श्रुतिविरोधिन्यसम्मता भवति। उपपद्यते च नित्यचैतन्य स्वरूपत्वम्ब्रह्मणः। एवम् क्षणिकविज्ञानादिमतमपि निरस्तम्वेदितव्यम्। अत्र चैतन्यशब्दप्रयोगः चेतनशब्दं गुणित्वद्योतकमन्तरा ब्रह्मणोभावमा

अरूपज्ञापकः पुंस्त्वादिव्यावर्त्तकश्च वेदितव्यः। यथा स्मर्य्यते च "सत्ता मात्रम् केवलविज्ञानमजम् सन्नित्यन्तत्त्वम्" "नासन्नसन्न सदसन्न महन्न चाणु नस्त्री पुमान्न च नपुंसकमेकबीजम्" इत्यादि ॥

इतिपरमपूज्यपादश्रीमद्योगदत्तशर्म्मकृतामृतोपदेशे पूज्यपाद श्रीमद्योगदत्तशर्म्मशिष्यश्रीमत्सत्यनारायणशर्म्मकृतभाष्ये प्रथमाध्यायस्य तृतीयः पादः समाप्तः ।१।३।३।

एवं जीवेश्वरब्रह्मरूपत्रिविधचैतन्यम्प्रतिपाद्य श्रीमान् सूत्रकारः प्रथमाध्यायस्य तृतीयपादं समाप्य चतुर्थपादमारभते। प्रथमाध्यायस्य प्रथमपादस्थतृतीयसत्रस्थस्वरूपशब्दमनुसदधानः स्वरूपम्भूतम्ब्रह्म निर्दिशतीतिर्वेदितव्यम्–

## तद्ध्यात्मनोरूपम् १।४।१

तच्छब्दः प्रथमाध्यायस्थतृतीयपादस्थतृतीयसूत्रस्थमव्ययहितब्रह्मशब्दम्परामृशति। यद्वा तच्छब्द एव स्वयम् ब्रह्मवाचकः "ॐतत्सदितिनिर्द्देशोब्रह्मणस्त्रिविधःस्मृतः" इतिस्मरणात्। हि इत्यवधारणार्थे अव्ययम्। आत्मनः स्वस्य जीवस्येतियावत्। रूपम् स्वरूपम्। तथा जीवस्य ब्रह्मरूपत्वम् "एष ब्रह्मैव इन्द" इत्युपक्रम्य "प्रज्ञाप्रतिष्ठा" इत्युपसंहृता ऋक्श्रुतिर्दर्शयति। तथा ऐतरेयारण्यकोपनिषदि महावाक्यमुपलभ्यते "प्रज्ञानम्ब्रह्म" इति। अत्र प्रज्ञानशब्देन प्राज्ञपदवाच्योजीवोऽभिधीयते येन वा पश्यतीत्यादि सर्व्वाण्येवैतानि प्रज्ञानस्य नामधेयानीत्यन्तम् श्रवणानुरूपस्य जीवस्यैव ईक्षणादिक्रियाकर्त्तृत्वस्य दर्शनात्। यजुर्वेदीयबृहदारण्योपनिषदि "अहम्ब्रह्मास्मि" इतिमहावाक्यञ्च तथैव जीवस्य ब्रह्मरूपत्वं दर्शयति। तथाच छान्दोग्य–श्रुतिगतम् "तत्त्वमसि" इतिमहावाक्यमपि दर्शयति। तथैव क्रमप्राप्ताथर्व्वणवेदगतम् "अयमात्मा ब्रह्म" इतिमहावाक्यञ्च दर्शयति। ननु "आत्मानं रथिनम्विद्धि शरीरं रथमेव तु" इत्यादिग्रन्थेनरथिरथादिरूपकविन्यासेन जीवं रथिनम् संसारमोक्षयोगन्तारम् कल्पयति "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम्" इतिग्रन्थेन विष्णुम्व्यापकम् ब्रह्मेति यावत् गन्तव्यङ्कल्पयति। अत्र विष्णोः परमम्पदम् इतिशब्देन विष्णोरन्यत् पदम्प्रतीयते। तथाच सद्वितीयत्वम् सावयवत्वञ्च आपततः। तत्रोच्यते राहोःशिरोवत् विष्णुपदयोरैक्यम्वेदितव्यम्। तथा सति सद्वितीयत्वञ्च निरस्तम्वेदितव्यम्। पद्यते गम्यते इतिव्युत्पत्या पदं गन्तव्यं

स्वरूपम्वेदितव्यम्।ततोऽङ्घ्रिरूपावयवत्वनिराकृतिर्वेदितव्या।"तंदुर्दशं गूढ़मनुप्रविष्टम् गुहाहितं गह्वरेष्ठं पुराणम् अध्यात्मयोगाधिगमेन देवम् मत्वा धीरो हर्षशोकौ जहाति" अत्राऽपि ग्रन्थे मन्त्रिमन्तव्यत्वेन जीवब्रह्मणी परस्परं भेदेन विशेषिते "द्वा सुपर्णा सयुजा सखाया समान-वृक्षम् परिषस्वजाते तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इतिश्रवणात्। अदनत्वेन जीवोऽभिधीयते अनशनचेतनत्वाभ्याम् ब्रह्म अनयोर्वाक्ययोः गुहाहितं गह्वरेष्ठम्पुराणम् इति समानवृक्षं परिषस्व-जाते इतिच। सर्व्वगतस्यापि ब्रह्मणः उपलब्ध्यर्थोदेशविशेषोपदेशो न विरु-ध्यते। सर्व्वगतसूर्यकिरणस्य वातायनरन्ध्रदेशोपलब्धिवत् इतिवेदित-व्यम्। एवमुक्तप्रकारेण जीवब्रह्मणोर्वैरूप्यमुक्तम्भवति। अत्र च महावा-क्येषु एकरूपत्वं श्रूयते। तदनुसारिणा सूत्रकारेण सूत्रितमुभयोरेकरू-पत्वम्। तस्मादुपस्थितमपरिहार्य्यमासमञ्जस्यम्। तत्रोच्यते जैवभावः संसारित्वमितियावत्। आविद्यकः अवास्तविक इत्यर्थः। ब्राह्मभावस्तु असंसारित्वमितियावत्। पारमार्थिकः तस्मात् संसारदशायाम् औपा-धिकमवास्तविकम् वैरूप्यम् वेदितव्यम्। मुक्तिदशायान्तु निरुपाधिकम् पारमार्थिकमेकरूपत्वम् वेदितव्यम्। नहि व्यर्थम्विवदितव्यम्। वादिप्र-तिवादिभ्यामिति। दर्शयति च श्रुतिः आत्मनः जीवस्येत्यर्थः मुक्ति-दशायां गन्तव्यमन्तव्यत्वादिवैरूप्यसचिवव्यवहारनिवृत्तिम्। "यत्र त्वस्य सर्व्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्येवंजातीयका अत्र श्रु-तौ सर्व्वमितिशब्देन जगल्लक्ष्यते। जगता ब्रह्म लक्ष्यते। "सर्व्वं खल्वि-दम्ब्रह्म" इत्यादिश्रुतेः जगतः ब्रह्मरूपत्वश्रवणात्। पुनरत्र च श्रुतौ अस्य शब्देन जीवस्येति अर्थोवेदितव्यः। आत्मैवाभूदितिशब्देन तस्य-ब्रह्मरूपत्वम्व्यज्यते। पुनरपि श्रुतिः जीवस्य ब्रह्मरूपत्वमुद्घोषयति "तमे-वैकञ्जानथ आत्मानम्" इत्युपदिशन्ती। एतदुक्तम्भवति न संसारद-शापन्नः देवमनुष्यादिरूपो विविधरूप आत्मा विज्ञेयः। किन्तु आविद्यकं संसारित्वम् विद्यया प्रविलाप्य तमेव परमात्मानमेकमद्वितीयम्ब्रह्मे-तियावत्। आत्मानम् स्वञ्जानीत अत्र एवशब्दः जीवस्य ब्रह्मरूपत्व-मवधारयति। ततोऽन्यरूपत्वम् निवारयतीतिवेदितव्यम्। ननु अत्र आत्म नः इतिशब्दस्य जीवस्येत्येवार्थः कथम् "आत्मा वै जायते पुत्रः" "एष आत्मनोऽर्धः पत्नी" "एष आत्मा अन्नमयः प्राणमयो मनोमयोविज्ञान-मयः" इत्यादि श्रुतिभ्यः। तत्रोच्यते जीवस्य आत्मरूपत्वम् तत्त्वमस्या-दिवाक्यसिद्धम् पारमार्थिकम्भवति। पुत्रादीनामात्मत्वञ्च अविद्यानि-

बन्धनम्वेदितव्यम्। तथा सूत्रितञ्च श्रीमता पतञ्जलिना "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति। अत एव पुत्रादीनाम् वस्तुतः अनात्मत्वमेव वेदितव्यम्। यत्र यत्र काचिदात्मप्रतीतिः सा सा ब्रह्मांशमात्रावलम्बिनीतिवेदितव्यम्। आत्मशब्दस्य अनन्यभूतब्रह्मरूपत्वाऽन्यवारकत्वप्रसिद्धेः। सिद्धः स्वयंशब्दोऽन्यवारकोब्रह्मवाचकः "कृष्णस्तुभगवान्स्वयम्" इत्यादिस्मृतेः। ननु घटादिष्वप्यचेतनेषु घटः स्वयं न जानात्येवमादि स्वयं शब्दस्य प्रयोगदर्शनात्। स्वयम्भावब्रह्मभावयोरेकत्वन्न सम्भवतीतिचेन्न। घटादिष्वपि स्फुरणरूपसत्तांशेन ब्रह्मण उपलम्भात् तेष्वपि स्वयंशब्दप्रयोगो न विरुद्ध इतिसिद्धम्। तथा स्मर्य्यते च "चेतनाचेतनभिदा कूटस्थात्मकृता नहि। किन्तुबुद्धिकृताभासकृतैवेत्यवगम्यताम्। यथा चेतन आभासः कूटस्थे भ्रान्तिकल्पितः। अचेतनो घटादिश्च तथा तत्रैव कल्पितः" इति। ननु त्वमहमादिषु सर्व्वत्रानुगतस्य स्वत्वस्येव सर्व्वत्रानुगतयोस्तत्तेदन्तयोरपि आत्मत्वम्। ततः ब्रह्मत्वं किन्न स्यादितिप्रष्टव्ये प्रतिवचनम्। तत्तेदन्तयोरुत्तममध्यमाधमरूपाहन्त्वमिदमादिष्वनुगतत्वेऽपि आत्मत्वाधिकवृत्तित्वासम्भवात् अहमात्मत्वन्त्वमात्मत्वमिदमात्मत्वमित्यादिव्यवहारसम्भवात् आत्मत्वन्न सम्भवति। अतएव ब्रह्मत्वमप्यनुपपन्नमिति वेदितव्यम्। जीवस्य आत्मनः ब्रह्मसाधर्म्यात् ब्रह्मत्वमुपपन्नमितरेषाम् पुत्रादीनान्तदसाधर्म्यात् तदनुपपन्नम् "नजीवाम्रियते" इत्यादि "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयोब्रह्म" इत्यादिजीवब्रह्मसारूप्यश्रवणम् "ततोन्यदार्त्तम्" इत्यादि। तदितरस्य प्रपञ्चस्य ब्रह्मवैरूप्यश्रवणमिति वेद्यम्। सूत्रकारश्च स्वरूपविस्मृतिम् संसृतिमवादीत्। संसारिणञ्च जीवमवादीत्। तस्मादुपपन्नमत्र आत्मनः शब्दस्य जीवस्येतिव्याख्यानमितिवेदितव्यम्। ननु जीव इतिब्रह्मेतिच प्रविभक्तत्वात् "यथा सुदीप्तात्पावकात् विस्फुलिंगाः सहस्रशः प्रभवन्तः स्वरूपास्तथाऽक्षराद्विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापियन्ति" इतिजीवानामुत्पत्तिप्रलयश्रवणाच्च जीवस्य विकारोपपत्तिः "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादिश्रवणात्। ब्रह्मणश्च अविकारोपपत्तिः ततोऽनुपपन्नन्तयोः सारूप्यमितिचेन्न "अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः। अनाशिनोऽप्रमेयस्य तस्माद्युद्ध्यस्व भारत" इत्यादिस्मरणात् जन्ममरणादिविकारित्वम् न जीवस्य वास्तविकम्। किन्त्वौपाधिकम् देहगतन्तत्रोपचरितमितिभावः। न चास्य प्रविभागः स्वतोऽत्र-

कल्पते "एकोदेवःसर्व्वभूतेषु गूढ़ः सर्व्वव्यापी सर्व्वभूतान्तरात्मा" इतिश्रुतेः। बुद्धयाद्युपाधिनिमित्तास्य प्रविभागप्रतीतिः सूर्य्यस्येव जलपात्रोपाधिनिमित्ता "यथैकमाकाशगमर्कबिम्बं शुद्धेषु पात्रेषु जलान्वितेषु। भजत्यनेकप्रतिबिम्बभागन्तथात्वमन्तः करणेषु देव" इत्यादिस्मृतेः। यथा वृक्ष इत्येकत्वम् शाखा इत्यनेकत्वम् यथाच समुद्र इत्येकत्वम् फेनबुद्बुदतरंगा इत्यनेकत्वम् एवं ब्रह्म इत्येकत्वम् देवगन्धर्व्वमनुष्यादजीवा इत्यनेकत्वम् तस्मात् वस्तुतः शाखानाम्वृक्षरूपत्ववत् फेनबुद्बुदतरङ्गाणां समुद्ररूपत्ववच्च देवादिजीवानाम्ब्रह्मत्वमितिवेद्यम्। ततोऽनुपपन्नम्प्रविभागनिमित्तम्वैरूप्यम् जीवब्रह्मणोरितिवेदितव्यम्। एवमेकरूपत्वज्ञानेन मोक्षव्यवहारः सेत्स्यति। नानात्वज्ञानेन कर्मकाण्डीयौ लौकिकवैदिकव्यवहारौ सेत्स्येते। इत्यपि वेदितव्यम्। वास्तविकवैरूप्यस्वीकारे मुक्तिन सेत्स्यति। ततोमोक्षशास्त्रवैयर्थ्यापत्तिर्भविष्यति।तस्मात्स्वीकार्य्यमेवावास्तविकम्वैरूप्यमिति। अवास्तविकवैरूप्ये तु बन्धः सेत्स्यति बन्धस्य मिथ्यात्वात् ज्ञानबाध्यत्वादितितस्करदृष्टान्तेन अनृताभिसन्धस्य बन्धनं सत्याभिसन्धस्य मोक्ष इतिवेदितव्यम् सकलव्यवहाराणां लौकिकवैदिकानाम्प्राग्ब्रह्मजीवैकरूपत्वज्ञानात् सत्यतोपपत्तेः स्वप्नव्यवहारस्येव प्रागबोधात् अवास्तविकवैरूप्यनिमित्तम् बन्धनमुपपन्नमितिवेद्यम्। यावद्धि न एकरूपत्वप्रतिपत्तिस्तावत् कर्त्तृत्वभाक्तृत्वादिमिथ्यावस्तुषु मिथ्याबुद्धिर्न कस्यचिदुत्पद्यते।अहम्ममेतिभ्रान्त्या आत्माऽऽत्मीयभावेन सर्व्वोजनः संश्लिष्यते विस्मृत्य स्वरूपम्। तस्मात्प्रागात्म्यैक्यबोधात् सकललोकवेदव्यवहाररूपबन्धनमुपपन्नम्वेद्यम। नहि स्वप्नदृक् स्वाप्नविषयमनृतं जानाति। तथा अविद्यादृक् आविद्यकं संसारबन्धनमितिवेद्यम्। अत्र भवति शंकोत्थानम् यदि वैदिकव्यवहारोऽप्यनृताऽभ्युपगतः तर्हि कारणगुणः कार्य्यमनुगच्छति इतिन्यायात् अनृतमहावाक्येन यातः मोक्षोऽप्यनृतः स्यात्। यथा अनृतस्य नटमायाकल्पितस्य आम्रस्य मुद्राद्रव्यस्य च फलादनं दैन्यमार्ज्जनं च न दृश्यते। तद्वत्। तत्रोच्यते अनृतकारणेनापि रज्जुसर्प्पेण अज्ञानास्थितेन शङ्काविषादादिनिमित्ता भीतिकम्पादिसत्कार्य्यमुपपद्यते। तद्वत् स्वप्नस्त्रीसङ्गेन वीर्य्यच्युतिश्च दृश्यते। तद्वत् तथाशास्त्रम् असत्येन स्वप्नदर्शनेन सत्यम्फलं समृद्धिरूपं मरणरूपञ्च दर्शयति तद्यथा"यदा कर्म्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धि तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने"अथ यः स्वप्ने पुरुषङ्कृष्णं-

कृष्णदन्तम्पश्यति स एनं हन्ति" इत्यादि लोकेऽपि सुस्वप्नदुःस्वप्नप्रसिद्धेः साध्वसाधुफलहेतुत्वात्। यद्वा वस्तुतः मोक्षापि ब्रह्मरूपस्य जीवस्य दिग्भ्रान्तिवत् अनृतानर्थस्थानकर्तृत्वाद्यवृत्तिरूपः विस्मृतकण्ठस्थचामीकरस्य स्मरणात् प्राप्तिरिव नित्यप्राप्तस्यात्मनः अविद्यया विस्मृतस्य विद्यया प्राप्तिः अतोऽयम् अनृत इत्युपपन्नम्। तथा स्मर्यते च "बद्धोमुक्तइतिव्याख्या गुणता मे न वस्तुतः। गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्" इति। अविद्यानिवृत्तिफलत्वात् सन् मोक्षाभिधेयः स्यात् अविद्याया अतात्त्विकत्वात् तन्निवृत्तेरपि अतात्त्विकत्वात् असन्नपि वाच्यः स्यादितिवेदितव्यम्। ननु तत्त्वमस्यादिवाक्येषु अविद्याशवलितस्य अल्पज्ञत्वादिविशेषणविशिष्टस्य जीवस्य मायाशवलितब्रह्मणा सर्वज्ञत्वादिविशेषणविशिष्टेन ईश्वरेण सामानाधिकरण्यम्प्रतीयते तर्हि कथमत्र जीवस्य निर्म्मायब्रह्मरूपमिति प्रतिजानाति श्रीमान्सूत्रकारः। अत्रोच्यते तत्त्वमादिपदार्थयोः जीवेश्वरयोः सामानाधिकरण्यम्प्रतीयमानमपि प्रकारान्तरेणाघटमानम्ब्रह्मण्येव निर्विशेषे पर्य्यवसानङ्गमयतीतिवेदितव्यम्। तथाहि न तद्वद्वैश्वदेव्यामिक्षेतिवदुभयोरेकार्थाभिधानेन सामानाधिकरण्यम्। यथोक्तम् "आमिक्षां देवतायुक्ताम्वदत्येवैष तद्धितः। आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम्" इति। विश्वेदेवाःदेवतायस्याः सा वैश्वदेवीति देवतार्थे विहित एष तद्धितोऽण्प्रत्ययः सामान्यतः ऋगादिवाचकत्वसम्भवेपि आमिक्षापदसान्निध्यात् आमिक्षामेव वदति। अतः तस्यैव तत्तद्धितकर्तृकविषयार्पणम् आमिक्षारूपविषयबोधनमित्यर्थः। चातुर्मास्यान्तर्गतवैश्वदेवप्रकरणस्था "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यावाजिनम्"इतिश्रुतेः। अस्यार्थः तप्ते दुग्धे दधिमिश्रणे कृते यत्कठिनं द्रव्यं सम्पद्यते तदामिक्षापदवाच्यम्, तेन विश्वेदेवदेवताकोयागो विधेयः। यद्द्रवद्द्रव्यन्तद्वाजिनम् तेन च वाजिदेवदेवताको यागो विधेय इति। कुतः अपरोक्षत्वपरोक्षत्वादिसम्बन्धिभिन्नार्थत्वात्। नचाजहत्स्वार्थया निरूढलक्षणया विशेषणविशेषभावेन नीलमुत्पलमितिवत्। यथोक्तम् "स्वबुद्ध्या रज्यते येन विशेष्यन्तद्विशेषणम्" इत्यादिनीलमुत्पलमित्यत्र यन नीलादिना स्वबुद्ध्या स्वाकारज्ञानेन विशेष्यमुत्पलादि रज्यते भास्यते इतरस्माद्व्यावर्त्यते तद्विशेषणमित्यर्थः। कुतः विरुद्धार्थत्वेन तदयोगात्। नच जहत्स्वार्थत्वन सम्बन्धिलक्षणया कुसुमितद्रुमा गङ्गेतिवत्। कुतः एकार्थत्वस्य विवक्षितत्वात्

अतोऽजहदजहत्स्वार्थलक्षणया भागत्यागलक्षणयेतियावत्। सोयन्देवदत्तइतिवत्। विरुद्धांशत्यागेन अनुगतचिदंशेन एकार्थेन सामानाधिकरण्येन निर्विशेषे अद्वितीये ब्रह्मणि पर्य्यवसानम्। अस्थूलादिवाक्यानान्तु साक्षादुपाधिनिषेधेन तत्पदार्थशोधन उपयोगात्। निर्गुणब्रह्मण्येव पर्य्यवसानम् वेदितव्यम्। श्रुतीनाम् ब्रह्मणि पर्य्यवसानम् स्मारयति "द्युपतय एव तेन यजुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः ख इव रजान्सि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः" एतावता ग्रन्थसदर्भेण सिद्धम् जीवस्य ब्रह्मरूपत्वम्। सूत्रकारसूत्रितमितिविदितव्यम्। ननु "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुत्या ब्रह्मणः अकर्त्तृत्वम्व्यपदिश्यते। "एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः" इत्यादिश्रुत्या जीवस्य कर्त्तृत्वञ्च। तर्हि कथं तयोर्वैरूप्यसम्भावनायामेकरूपत्वम् भवेदितिप्रश्नद्वये प्रतिवचनम्। उपाधिधर्म्माध्यासेन जीवस्य कर्त्तृत्वम् व्यपदिश्यते। न स्वाभाविकम् तथा च श्रुतिः "ध्यायतीव लेलायतीव" अस्यां श्रुतौ इवशब्दः तस्य वास्तवीं ध्यानादिक्रियान्निवारयति। उपाधिधर्म्माध्यासमावेदयतीतिवेदितव्यम्। "आत्मेन्द्रियमनोयुक्तम्भोक्तेत्याहुर्मनीषिणः" इत्यादिस्मृतिरपि उपाधिसम्पन्नस्यैव शारीरस्य जीवस्य भोक्तृत्वसंसूचितकर्त्तृत्वविशेषलाभं स्मारयति। तथा च श्रुतिः "यत्र हि द्वैतमिव भवति तदितर इतरम्पश्यति" इति संसारदशायां कर्त्तृत्वं श्रावयति। "यत्र त्वस्य सर्व्वमात्मैवाभूत् तत्केन कम्पश्येत्" इत्यादिश्रुतिः मुक्तिदशायान्तु कर्त्तृत्वं निवारयत्येव। एवमुक्तप्रकारेण जलस्य शैत्यवज्जीवस्य नैसर्गिकं कर्त्तृत्वं न सम्भवति। किन्तु यथालोके कीनाशः कुद्दालादिकृषिसाधनहस्तः कर्त्ता व्यापृतोदुःखमनुभवति। स एव स्वावसथस्थः विमुक्तकुद्दालादिसाधनः विकरण इतियावत् स्वस्थोऽव्यापृतो सुखमनुभवति। एवमाविद्यकद्वैतभावापन्नोजीवः स्वप्नजागरितावस्थयोः कर्त्ता दुःखमनुभवति। स एव तच्छ्रमापनोदनाय स्वरूपं परम्ब्रह्म सम्पद्य विमुक्तशरीरेन्द्रियादिकार्य्यकरणसमुदायः सम्प्रसादावस्थायाम् सुषुप्ताववितियावत् सुखमनुभवति। तथा मुक्तिदशायामपि अविद्यान्धस्तमसम्विद्याप्रदीपेन प्रविलाप्य स्वयमेव केवलोनिर्व्यापारोविकरणः सुखमनुभवतीतिवेदितव्यम्। यथा कुद्दालादिकरणापेक्षः व्यापारी कीनाशः कर्त्ताभवति। स्वतः शरीरेणेतियावत्

अकर्त्तैव भवति। एवमयञ्जीवः मन आदिकरणापेक्षः व्यापारी कर्त्ता भवति। स्वतः स्वरूपेणेतियावत् अकर्त्तैवभवतीतिवेदितव्यम्। एव जीवस्याविद्यककर्तृत्वस्वीकारात् यजेत् जुहुयात् दद्यादित्यादिविविधम्विधिशास्त्रं मा हिंस्यात् ब्राह्मणो मांसं न भुञ्जीत इत्यादिविविधं निषेधशास्त्रं च अर्थवद्भवति। अन्यान्यपि विहारोपदेशादीनि वाक्यानि अर्थवन्ति भवन्तीतिवेदितव्यम्। अकर्त्रात्मसाङ्ख्यमतखण्डनं च सिद्धम्। स्वाभाविकाकर्त्तृत्वाभ्युपगमाच्च तत्सत्यमितिमीमांसकादिपक्षनिरासः। कर्त्तृत्वाद्यनिर्मुक्तस्य जलस्येव शैत्यात् जीवस्य निर्मोक्षप्रसङ्गनिरासश्चेतिवेदितव्यम्। भवति च पुनः शङ्कोत्थानम् जीवोब्रह्मणः अंशो भवितुमर्हति "पादोऽस्य सर्व्वाभूतानि त्रिपादस्यामृतन्दिवि" इतिश्रुतेः। अत्र श्रुतौ भूतशब्देन जीवप्रधानानि चराचराणि व्यपदिश्यन्ते "मा हिंस्यात्सर्व्वाभूतानि" अत्र श्रुतौ तदर्थकभूतशब्दप्रयोगदर्शनात् पादशब्देन अंशोनिर्दिश्यते। अंशोपादोभाग इत्यर्थान्तरम्। तथा स्मर्य्यतेऽपि "ममैवांशोजीवलोके जीवभूतः सनातनः" इति। तथासति अग्नेर्यथा विस्फुलिङ्गेन सह भेदो दृश्यते। तथा ब्रह्मणो जीवेन सह भेद उपपद्यते न तयोरेकरूपत्वं सम्भवतीति। तत्रोच्यते जीवस्यानंशत्वमपि अभेदाभिधायिन्यः श्रुतयः प्रतिपादयन्ति "तत्सृष्ट्वा तदेवानुप्राविशत्" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "नान्योतोऽस्ति द्रष्टा" इत्येवं जातीयका एवमुभयत्र श्रुतिदर्शनादुपस्थितम्महदासमञ्जस्यम्। ननु स्यादेतद्यदि उभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्याताम्। परन्त्वत्र जीवब्रह्मणोरभेद एव प्रतिपिपादयिषितः। सत्येकरूपत्वे विनिर्मुक्तिसिद्धे घटाकाशादिवत् औपाधिकभेदोंऽशित्वमितियावत् वेदितव्यः। सहस्रशः ब्रह्मणोनिरवयवत्वे श्रुतिस्मृतिभ्यां निर्दिष्टे सति न ब्रह्मणोऽशो जीवः सम्भवति। तत एकमेव परब्रह्म सर्व्वभूतान्तरात्मरूपम जीवभावेनावस्थितमितिवेद्यम्। तथा भवति च शास्त्रम् "एकोदेवः सर्व्वभूतेषु गूढ़ः सर्व्वव्यापी सर्व्वभूतान्तरात्मा" इति। तस्मादुपपन्नम्ब्रह्मजीवयोरेकरूपत्वम् पारमार्थिकम् अंशांशिभावस्तु घटाकाशमठाकाशयोरिवौपाधिकः अपारमार्थिक इतिवेदितव्यम्। एवं नियम्यनियामकादिभावा अपि अविद्यानिबन्धना एव वेदितव्याः। यतः प्रत्यगात्मा श्रुतिस्मृतिप्रसिद्ध एक एव भवति। न द्वौ प्रत्यगात्मानौ सम्भवतः। एकस्यैव तस्य तु नियम्यनियामकादिभेदव्यवहारः औपाधिकोमन्तव्यः। यथा एकस्यैवाकाशस्य घटाकाशोमहाकाश इतिभेदव्यपदेशः अघटि-

तद्घटनापटीयस्या मायाया ऐश्वर्यवत्या अनुभावेनासम्भाव्यमपि सम्भाव्यम्भवतीतिवेदितव्यम् । १ । ४ । १ ।
ब्रह्मज्ञानादेव मोक्षप्रसिद्धेःतज्ज्ञानाय यत्नोविधेय इतिसूत्रयति श्रीमान् सूत्रकारोऽग्रिमसूत्रेण-

## यतितव्यन्तद्विज्ञाने १।४।२

तद्विज्ञाने तस्य पूर्वनिर्दिष्टस्य ब्रह्मणोविज्ञाने सम्प्रबोधे यतितव्यम् यत्नोविधेयः। अत्र तेनैवामृतत्वनिष्पत्तेरितियोज्यम्। तद्विज्ञानेनैव मोक्षसिद्धेरित्यर्थः।तथाच श्रूयते"ज्ञात्वा तम्मृत्युमत्येति नान्यः पन्था विमुक्तये" "आत्मावा रे द्रष्टव्यः श्रोतव्योमन्तव्योनिदिध्यासितव्यः सोऽन्वेष्टव्यः सविजिज्ञासित्यः" इत्यादि । स्मर्यतेच "आदौ स्ववर्णाश्रमवर्णिताःक्रियाः कृत्वासमासादितशुद्धमानसः। समाप्य तत्पूर्वमुपात्तसाधनः समाश्रयेत्सद्गुरुमात्मलब्धये । अज्ञानमेवास्य हि मूलकारणं तद्धानमेवात्र विधौ विधीयते । विद्यैव तन्नाशविधौ पटीयसी" "पाकस्य वह्निवज्ज्ञानम्विना मोक्षोन सिध्यति" इत्यादि ।यद्यपि भाट्टैकदेशिनः प्राभाकराश्च फलेच्छाम्विना कृतं नित्यनैमित्तिककर्म्मैव मुक्तिसाधनं मन्यन्ते। अपरे भर्तृप्रपञ्चभास्करप्रभृतयः कर्म्म च प्राणाद्युपासनञ्च मिलितं मुक्तिसाधनम्प्रवदन्ति । उक्तैकदेशिनस्तु ज्ञानकर्म्मसमुच्चयञ्च मुक्तिसाधनम्वर्णयन्ति । परन्तु एते आचार्याः स्वाभिमतिभिरेव वेदार्थं कल्पयन्ते । न तु तत्त्वविद्वदितमार्गेण "ज्ञानादेव तु कैवल्यम्" इत्यादिश्रवणात् "न कर्म्म तज्जं सविरोधमीरितम्" इत्यादि स्मरणाच्च।तान् पक्षान् सहसा नानुमन्ये।किन्तु ज्ञानसाधनतया कर्म्मण उपासनायाश्च परम्परामोक्षसाधनतामभ्युपैमि विद्याकर्म्मणोऽवान्तर फलश्रवणान्न साक्षान्मोक्षहेतुत्वमितिनिश्चिनोमि च । श्रुतिश्च "कर्म्मणा पितृलोको विद्यया देवलोकः" इत्येवंजातीयका कर्म्मणा पितृलोकप्राप्तिं विद्यया उपासनयेतियावत् देवलोकप्राप्तिं श्रावयति । स्मृतयश्च "कषायपक्तिः कर्म्माणि" "तेषां सततयुक्तानां भजतांप्रीतिपूर्वकम्। ददामिबुद्धियोगन्तं येन मामुपयान्ति ते । तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इत्येवंरूपास्तयोः रागद्वेषादिसंस्काररूपहृद्गतमलनाशनरूपमेव फलंव्यपदिशन्ति। अपिच यज्ञेन दानेनेत्याद्युपक्रम्य विविदिषन्ति इत्युपसंहृताश्रुतिः कर्म्मफलं विविदिषां व्यपदिशति । विविदिषालक्षितम्वेदनम् ज्ञानमि-

तियावत् तत्फलम्व्यञ्जयति। एवमुक्तप्रकारेण न कर्म्मणा नचोपासनया मुक्तिसिद्धिरितिसिद्धम्। ततोनोपासनाकर्म्मसमुच्चयेनापि मोक्षनिष्पत्तिरितिवेदितव्यम्। नक्षत्राणां सूर्यचन्द्रातिरिक्तग्रहाणाञ्च पार्थक्येन तमोनाशनाशक्तौ तेषां समुच्चयेनापि तमोनाशनाशक्तिवत् कर्म्मण उपासनायाश्च पार्थक्येन संसारनिवारणाशक्तौ तयोः समुच्चयेनापि संसारनिवारणाशक्त्युपपत्तिरितिवेदितव्यम्। यद्यपि "संहतिःकार्य्यसाधिका" इतिस्मृतेरेकतृणेन शशकबन्धनाशक्तेनापि संहतिगतेन गजबन्धनदर्शनात् कर्म्मण उपासनायाश्च पार्थक्येन संसारनिवारणाशक्तावपि तयोः समुच्चयेन संसारनिवारणशक्तिरूपपद्यत इतिचेन्न,लोके घटादिभावपदार्थः प्रहारादिक्रियाविनाश्योदृश्यते। अतो ज्ञानं सत्यमनारोपितम् भावपदार्थं न व्यपनुदति। तथा क्रिया मिथ्याभूतमारोपितम् रज्जुसर्पादिभावम् न नाशयति। यतोलोके मिथ्याभूतम्वस्तु शुक्तिरजताद्यधिष्ठानज्ञाननाश्यं दृश्यते। अमुना प्रकारेण वस्तुस्वभावभेदे सिद्धे सति श्रुतिस्मृतिप्रसिद्धोज्ञानविनाश्योनिश्चितोऽध्याससिद्धः संसारः तदपहतये कर्म्मोपासनासमुच्चयः संहतिगतोपि न समर्थ इतिवेदितव्यम्। तस्मात् ज्ञानादेव मुक्तिसिद्धिरितिसिद्धम्। न कर्मादितस्तत्सिद्धिरिति च। नहि लोके शशकवधूः सिंहपोतप्रसवित्री दृश्यते स्वभावः कारणम्परमितिभावः। नच ज्ञानकर्म्मणोः समुच्चयेनापि मुक्तिजननयोग्यता सम्भाव्यते। उभयोर्विरुद्धाधिकारिकत्वात्। तथाच स्मर्य्यते "देहाभिमानादभिवर्द्धते क्रिया विद्यागताहंकृतितः प्रसिद्ध्यति" इति धनवान् समर्थः त्रैवर्णिकः पण्डितोहम् इत्याद्यभिमानी कर्म्माधिकारी उच्यते कर्म्मशास्त्रे। रागादिहीनः वशीकृतबाह्याभ्यन्तरेन्द्रियःसंन्यासी देहधारणातिरिक्तव्यापारनिवृत्तिशीलः ज्ञानाधिकार उच्यते ज्ञानशास्त्रे। इत्थं भेदे जाग्रति सति ज्ञानकर्म्मसमुच्चयं मुक्तिसाधनं वक्तुमिच्छन्नसौ समुच्चयवादी हेमन्तशिशिरयोः शीतभीतः सन् युगपदेव आतपम्व्यजनञ्चोभयं सहद्वयं समाश्रयेत्। सहसमाश्रयं कुर्य्यादितिभावः। तथा असम्भवसम्भावना सम्भाव्येत। एतावता उक्तम्भवति कर्म्मानपेक्षं स्वतन्त्रं ज्ञानं मुक्तिसाधनमिति तथाच स्मर्य्यते "ननु स्वतन्त्रा ध्रुवकार्य्यकारिणी विद्या न किञ्चिन्मनसाप्यपेक्षते" अत्र स्मृतौ विद्यापदवाच्यं ज्ञानम्वेदितव्यम्। किञ्चित्पदेन कर्म्मादितत्समुच्चयं च निर्दिशति। मनसापदेन मानसक्रिया प्रधानमुपासनं लक्षयतीतिवेदितव्यम्। भवति च पुनः शंकोत्थानम्।

"सा कस्मिन् परमप्रेमरूपा" "यल्लब्ध्वा पुमान् सिद्धोभवत्यमृतोभवति तृप्तोभवति" इतिनारदसूत्रद्वयात् भगवत्परमप्रेमरूपभक्तेरेव मुक्तिसाधनत्वाभ्युपगमात् कथं ज्ञानादेवेतिश्रुतिरर्थवती स्यात्। तत्रोच्यते भजसेवायामितिधातोरर्थानुगमात् सेवापदवाच्या उपपद्यते। सा हि सकर्म्मकधातुसिद्धा कर्त्तृकर्म्मापेक्षणी भवितव्या ततोहि कर्त्तृत्वकर्म्मत्वरूपवस्तुद्वयावगाहित्वात् द्वैतभावावलम्बिनी भवति। सति द्वैतभावे भयम्भवति। "द्वैताद्धि भयम्भवति' मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रवणात्। ततोभक्तिर्न साक्षान्निर्वाणफलप्रदा किन्तु ज्ञानसाधनतया पारम्पर्य्येण परमपुरुषार्थप्रदायिनीतिवेदितव्यम्। तथासूत्रितं श्रीमता पतञ्जलिना "समाधिसिद्धिरीश्वरप्रणिधानात्"इति। अत्रेश्वरप्रणिधानं सर्व्वक्रियाणाम्परमगुरावर्पणम् तत्फलसन्न्यासोवा इत्येवंलक्षणेन पतञ्जलिसूत्रभाष्ये श्रीमान् वादरायणिराचार्य्य ईश्वरप्रणिधानपदवाच्याम्भक्तिं लक्षयति। लक्षयति च भक्तिं श्रीमान् देवर्षिर्नारदो निजभक्तिसूत्रग्रन्थे तृतीयानुवाके एकोनत्रिंशत्तमसूत्रेण "तदर्पिताखिलाचारता तद्विस्मरणे परमव्याकुलता" इति। अतः सिद्धमीश्वरप्रणिधानम् भक्तिपदवाच्यम् सर्व्वक्रियाणाम्परमगुरावर्पणम् इतियोगसूत्रीयभाष्योक्तेः। तदर्पिता खिलाचारता इतिनारदसूत्रोक्तेश्च ईश्वरप्रणिधानभक्त्योरेकार्थत्वप्रतिपादकलक्षणाभ्यामेकत्वसिद्धिरितिवेदितव्यम्। ईश्वरप्रणिधानभक्तिशब्दौ पर्य्यायावितियावत्। अतः सिद्धमीश्वरप्रणिधानवत ईश्वरार्पितसर्व्वभावस्य भक्तस्य समाधिसिद्धिरिति। यया सर्व्वमीप्सितमवितथञ्जानाति देशान्तरे देहान्तरे कालान्तरे च। ततोस्य प्रज्ञा यथाभूतं जानाति। एतावता भक्तेर्ज्ञानसिद्धिरित्युपपद्यते। तथाच योगसूत्रम्। "ऋतम्भरा तत्र प्रज्ञा" इति। तथैव निर्दिशति श्रीमान् भगवान् करुणापूरितहृदयः "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतोज्ञात्वा विशते तदनन्तरम्" इति। परन्तु "यल्लब्ध्वा पुमान् सिद्धोभवत्यमृतोभवति तृप्तोभवति" अत्र "कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः" अत्र च नारदसूत्रभगवद्वाक्ययोः सिद्धसंसिद्धिशब्दाभ्याम् ज्ञानप्राप्तिरभिधीयते "न कर्म्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः" इत्यादिश्रुतेः ज्ञानमात्रादेव मोक्षजनकत्वश्रावणात्। सिद्धोभवत्यनेन ज्ञानी भवतीत्यभिप्रायोवेदितव्यः। ततश्च युक्तमेव अमृतोभवति मुक्तोभवतीत्यर्थः।

तृप्तोब्रह्मसुखस्पर्शात् स्वयमानन्दरूपोभवति। ततोविषयसुखवितृष्णो-भवतीत्यर्थः। तथा च स्मर्य्यते "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः, "प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्। उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्" इत्यादि। तथाश्रूयते च " रसं ह्येवायं लब्ध्वानन्दीभवति" इति। यत्तु तपस्विभ्योधिकोयोगी ज्ञानिभ्योपि मतोऽधिकः कर्म्मिभ्यश्चाधिकोयोगी तस्माद्योगी भवार्ज्जुन।योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान्भजते योमां स मेयुक्ततमोमतः" अत्रभगवद्वाक्यात् भक्तेः सर्व्वोत्कृष्टत्वं गम्यते। ज्ञानिभ्यश्च योग्यधिकोमन्यते। योगिभ्यश्च भक्तोऽधिकोमन्यते ततोहि ज्ञानाच्छ्रेष्टतरा भक्तिरित्यवगम्यते । तत्रोच्यते अत्र योगिशब्देन विराड्ढिरण्यगर्भेश्वराद्युपासकोऽभिधीयते नच शुद्धसमाधिनिष्ठ इतिवेदितव्यम्। ज्ञानिशब्देन मीमांसकादिशास्त्रविदभिगम्यते नतु ब्रह्मज्ञानीतिवेदितव्यम्। अन्यथा भगवद्वाक्यात् भगवद्विरोधापत्तिः प्रसज्येत। " नहि ज्ञानेन सदृशं पवित्रमिह विद्यते। तत्स्वयं योग संसिद्धः कालेनात्मनि विन्दति" इति। अत्र ज्ञानस्य सर्व्वसाधनापेक्षया पवित्रतमत्वद्योतनात् योगेन साधनरूपेण साध्यरूपस्य ज्ञानस्य च औत्कृष्टयव्यञ्जनाच्च पूर्व्वोक्तवाक्यस्वारस्यवैपरीत्यादित्यर्थः। अत्र भजत इति क्रियालक्षितोभक्तोब्रह्मविदेव वेदितव्यः। न तु सगुणोपासक इति विज्ञेयः। योगिनामितिश्लोकोवक्ष्यमाणप्रकारेण व्याख्येयोभवति "सर्व्वं खल्विदम्ब्रह्म" "सर्व्वं ह्येतद्ब्रह्म' "ब्रह्मैवेदं सर्व्वम्" इत्यादिश्रुतिशतैः "सोऽहम् स च त्वम् स च सर्व्वमेतत् भूतानि विष्णुर्भुवनानि विष्णुः" "वासुदेवः सर्व्वमिति" इत्यादिस्मृतिसहस्रैश्च रज्ज्वारोपितभुजङ्गवत् ब्रह्मण्यारोपितं सकलञ्जगज्जालमेतत् रज्ज्वधिष्ठानवस्तुस्वरूपवत् ब्रह्माधिष्ठानवस्तुस्वरूपमित्यर्थेऽवधारिते सति सर्व्वस्य ब्रह्ममात्रस्य श्रद्धावान्, श्रद्धा नाम विपरीतभावनाव्युदासेन उक्तार्थानुसार्य्यद्वयब्रह्मनिष्ठचित्तवृत्तिविशेषः ब्रह्माद्वैतप्रतीतिरित्यर्थः। तद्वानेव सन्नितियावत्। योमुमुक्षुर्ब्रह्मज्ञानी मद्गतेन दृष्टं श्रुतं स्पृष्टं मतं विज्ञातं बाह्यान्तरेन्द्रियवृत्तिगोचरमितियावत् सर्व्वं वस्तुजातं ब्रह्मैवेतिविपरीतभावनाव्युदासेन श्रुतिस्मृतियुक्तिनिर्धारितेऽर्थे अद्वैतैकरसे सच्चिदानन्दात्मनि मयि ब्रह्मणि गतेन बहिरन्तस्सर्व्वत्र मत्सत्तानुवर्त्तिनेतिभावः। अन्तरात्मना चित्तेन यद्वा "यो वेद निहितं गुहायां परमे व्योमन्" "आत्मानमन्विच्छ गुहां प्रविष्टम्" इत्यादिश्रुतिभिःब्रह्मण

उपलब्ध्यर्थोऽन्तर्देशोऽभिधीयते । ईश्वरस्तत्रान्तःकरणे निचाय्यः श्रूयते यथा शालग्रामशिलायां हरिः तत्रास्य बुद्धिर्विज्ञानं ग्राहकम्भवति । सर्व्वगतोपीश्वरः तत्रोपलभ्यते । ततः मद्गतेन अहम्ब्रह्मास्मि सोहम् इत्येवंरूपेण ब्रह्मनिष्ठेन अहङ्कारेण यथा स्मर्य्यते " यथा जलस्थ आभासः स्थलस्थेनावदृश्यते। स्वाभासेन तथा सूर्य्योजलस्थेन दिविस्थितः। एवं त्रिवृदहङ्कारोभूतेन्द्रियमनोमयैः। स्वाभासैर्लक्षितो येन सदाभासेन सत्यदृक् " इत्यादि । मां ब्रह्मात्मानं भजते। सर्व्वमिदमहञ्च ब्रह्मैवेति स्वञ्च जगच्च सर्व्वं ब्रह्मैव पश्यति मामेव परमात्मानं सर्व्वात्मना योनुसन्दधाति इत्यर्थः । योगिनां सगुणोपासकानां सर्वेषामपि अत्र पञ्चम्यर्थे षष्ठो वेदितव्या योगिभ्यः सर्व्वेभ्योपीत्यर्थः । स एव युक्ततमः श्रेष्ठः यतः तेषां सगुणोपासकानां क्रममुक्तिः श्रूयते अद्वैतनिष्ठानां सद्योमुक्तिश्च "स तेजसि सूर्य्ये सम्पन्नः" "स सामभिरून्नीयते ब्रह्मलोकम्" इत्येवंजातीयका क्रममुक्तिप्रतिपादिका श्रुतिर्वेदितव्या "विमुक्तश्च विमुच्यते " इत्येवं जातीयका च सद्योमुक्तिप्रकाशिका श्रुतिरवगम्या । उपासकाश्च अविद्यापटलव्यवहित दृष्ट्या उपास्योपासकादिभेदमालम्ब्य विराडाद्युपासते अद्वैतनिष्ठास्तु श्रवणमननादिजन्यविद्याप्रदीपनिर्धूतद्वैतभ्रमपटलाः सर्व्वत्र स्वेषु परेषु च ब्रह्मैव पश्यन्ति । एतद्व्याख्यानं भगवदुक्तयुक्ततमत्वप्रतिपादकं वेद्यम । ननु भजनक्रियावान् नैतादृशोज्ञानी भवितुमर्हति क्रियाज्ञानयोस्तमःप्रकाशयोरिव विरोधसत्त्वात् । तत्रोच्यते भक्तिर्द्विविधा द्वैतावलम्बिनी अद्वैतावलम्बिनी च । यथा स्मर्य्यते "श्रवणं कीर्त्तनं विष्णोः स्मरणम्पादसेवनम् । अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" इति । अत्र श्रवणादारभ्य सख्यपर्य्यन्ता अष्टविधा द्वैतावलम्बिनी भक्तिः । चरमा आत्मनिवेदनरूपा अहङ्काररहिता नास्मि न मे नाहमित्येवमध्यवसायरूपा अद्वैतावलम्बिना भक्तिर्वेदितव्या । अमुमात्मनिवेदनकर्त्तारम् भक्तं ज्ञानित्वात् स्वात्मत्वेन स्वस्मादभिन्नत्वेनेतियावत् निर्द्दिशति "चतुर्व्विधा भजन्ते माम्" इत्युपक्रम्य "ज्ञानी त्वात्मैव मे मतम् " इत्युपसंहृतवाक्यैः अत एवम्भूतोऽद्वैतावलम्बिनीपदवाच्यभक्तिनिष्ठो ज्ञानीत्येव वेदितव्यम् । द्वैतावलम्बिन्या एव भक्तेश्चरमपरिणामरूपत्वात् अद्वैतावलम्बिनीस्थितिरपि भक्तिपदवाच्यैव भवतीत्यवधेयम् । वस्तुतः या भक्तेः परा काष्ठा सा ज्ञानसारूप्याज्ज्ञानमेवेतिवेदितव्यम्। तथा चस्मृतिः "भक्तिर्ज्ञानाय

कल्पते ” अपिच “सर्व्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्व्वथा वर्त्तमानोपि स योगी मयि वर्त्तते ” अत्राप्येकत्वमास्थितो मयि वर्त्तत एतच्छब्दाभ्यां भक्तस्याद्वैतावलम्बनत्वब्रह्मनिष्ठत्वे व्यज्येते। अपिच “बहूनांजन्मनामन्ते ज्ञानवान्मां प्रपद्यते। वासुदेवः सर्व्वमिति स महात्मा सुदुर्ल्लभः ”। अत्र ज्ञानिशब्देन ग्रन्थस्वरसात् पूर्व्वनिरुक्तलक्षणो भक्त एवावधेयो न च वेदान्तसाधनसम्पन्नः श्रवणादिनिष्ठोज्ञानीतिवेदितव्यम्। एतावता उक्तम्भवति या भक्तेः पराकाष्ठा सा ज्ञानमेवेति। भवत्यत्र पुनः शङ्कावसरः। श्रीमान् भगवान् वासुदेवः यतोगीताशास्त्रे स्वभजनशीलम्भक्तमुत्कृष्टतमम्व्यपदिशति। तस्मात्सगुणोपासक एव भगवदुक्त्या सर्व्वश्रेष्ट इति कथं न स्यात्। ततो द्वैतावलम्बिन्येव भक्तिर्ज्ञानाद्गरीयसी साक्षान्मुक्तिद्वारकपाटोद्घाटिनीति च कथं न स्यात्। तत्रोच्यते नात्र भगवतः स्वस्य सगुणत्वविवक्षा किन्तु नैर्गुण्यविवक्षैव यतोव्यपदिश्यते स्ववाक्यैरेव तस्य निर्गुणस्वरूपत्वम् “अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः” “यस्मात् क्षरमतीतोहमक्षरादपि चोत्तमः। अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः” “त्रिभिर्गुणमयैर्भावैरेभिः सर्व्वमिदं जगत्। मोहितं नाभिजानाति मामेभ्यः “परमव्ययम्” इत्यादिभिः। एवम् “अनिच्छतोपि मे भक्तिर्गतिमग्र्यां प्रयच्छति” इयं स्मृतिरपि निष्कामभक्तस्य विषयवितृष्णस्य लब्धब्रह्मसंस्पर्शस्य ज्ञानिरूपत्वेन मुक्तिं स्वीकुर्वाणा अर्थवती भवतीतिवेदितव्यम्। यद्यप्यस्मिन् प्रकरणस्थले काशीमरणान्मुक्तिरित्यादीनि ज्ञानसाधनत्वेन व्याख्येयानि स्थलानि दृष्टिगोचराणि वर्त्तन्ते। तथापि ग्रन्थविस्तारभिया तान्यनवेक्ष्य कर्म्मादिप्रसङ्गेन संक्षेपेणैवोक्तमितिवेदितव्यम्। अपिच “विस्मृत्या संसृतिं व्रजेत्” इत्यादिस्मृतिव्यपदेशानुसारिणा श्रीमता सूत्रकारेण स्वरूपविस्मृतिः ब्रह्मविस्मरणमितियावत् संसृतिरभिहिता। तस्मात् तद्विज्ञानेनैव सोहमस्मीतिसंस्मृतात्मस्वरूपः पुरुषो मुक्तो भवितुर्महतीतियुक्तम्। विज्ञानस्यैव मुक्तिसाधनत्वम् न कर्म्मादिसाधनानामितिवेदितव्यम्। दृश्यतेऽपि कर्म्मिणाम् नहुषादीनां स्वर्गच्युतिः उपासकानां जयविजयादीनां वैकुण्ठच्युतिः भक्तस्य च भीष्मस्य शरशय्यागतस्य उत्तरायणकालप्रतीक्षणम्। ध्वन्यते च ततः अर्चिरादिमार्गेण स्वर्गगमनम् क्रममुक्तिर्वा। अत्र विज्ञानशब्दः विशेषेणज्ञानवाचकः अध्यारोपापवादनिरूपिताद्वितीयप्रत्यगभिन्नब्रह्मसाक्षात्कार

इति भावः शास्त्रीयज्ञानव्यावर्त्तकः आनुभविकज्ञानद्योतक इति वेदितव्यम् । यद्वा परोक्षज्ञानव्यावर्त्तकः अपरोक्षज्ञानद्योतकोवेदितव्यः । ब्रह्मास्ति इति परोक्षज्ञानम् ब्रह्मास्मि इत्यपरोक्षज्ञानम् वेदितव्यम् । तत्र परोक्षज्ञानमपरोक्षज्ञानम् विज्ञानमिति यावत् जनयतीतिवेदितव्यम्। तथास्मर्य्यते "वाक्यमप्रतिबद्धं सत् प्राक् परोक्षावभासिते । करामलकवद्बोधमपरोक्षम्प्रसूयते" इति गुरुमुखाल्लब्धम् तत्त्वमस्यादिशब्दजन्यं शाब्दमितियावत् परोक्षम्ब्रह्मविज्ञानम्बुद्धिपूर्व्वकृतम् समस्तम्पापं वह्निवद्दहति । तथा गुरुमुखाल्लब्धम् शाब्दमपरोक्षम्ब्रह्मविज्ञानम् संशयविपर्य्ययरहितम् मध्याह्नकालीनसूर्य्य इव बाह्यतमसः अज्ञानतमसोनिवर्त्तकमत एव मोक्षजनकमितिवेदितव्यम्। यथास्मर्य्यते च "परोक्षम्ब्रह्मविज्ञानं शाब्दं देशिकपूर्व्वकम् । बुद्धिपूर्व्वकृतम्पापं कृत्स्नं दहति वह्निवत्। अपरोक्षात्मविज्ञानम् शाब्दं देशिकपूर्व्वकम् । संसारकारणज्ञानतमसश्चण्डभास्करः" इति। ननु यथा न शतसहस्रवारमपि पौनःपुन्यपुरस्सरं रविरिति रविरित्युच्चरितेन तमोहानिरुपपद्यते तथैव अहम्ब्रह्मास्मि अहम्ब्रह्मास्मीत्यसकृदभ्यसनेन शाब्दज्ञानेन नाज्ञानतमोहानिरितिचेन्न, शाब्दमपि अखण्डाकारवृत्यात्मकम् यतः स्वयम्प्रकाशमित्यपरोक्षात्मवस्तुविषयम् ततःस्वस्यापरोक्षताम् न जहाति नापरोक्षविषयज्ञानं परोक्षमितियुज्यते । सतिच अपरोक्षात्मलाभे अध्यासनिवृत्तिरूपा संसृतिनिवृत्तिरुपपन्नैव भवति। यथा दशाज्ञजनानाम् कश्चिद्गणःकान्तारमतिक्रम्य स्वातिरिक्तगणितेन दशमोकान्तारे व्यापादित इति रुदन् तत्र हेत्वभिज्ञेन अन्यपथिकेन प्रेरित एकः पूर्व्वं नवगणनानन्तरमेव दशमस्त्वमिति वचनं निपुणं निशम्य स्वं दशमं विस्मृतं साक्षात्कृतमेव कण्ठगतचामीकरवत् साक्षात्कृत्य परोक्षतामत्येत्य न रोदिति स्म । किन्तु आनन्दीभवति स्म। विचार्य्यतामत्र दशमानभिज्ञस्य या शोकनिवृत्तिः आनन्दप्राप्तिश्च सा न दशमप्राप्तिनिबन्धना किन्तु मोहविस्मृतदशमस्वात्मनः पथिकोक्तिदशमस्त्वमितिशब्दजन्यदशमस्वात्मबोधनिबन्धना । तस्मादुपपन्नमपरोक्षशाब्दबोधेन प्रपञ्चप्रशमनम् । व्याख्यानञ्चयुक्तमनवद्यम् । १।४।२।

एवं श्रीमान्सूत्रकारः ब्रह्मविज्ञानाय यत्नोविधेय इति प्रतिपाद्य तत्प्रकारम्प्रदर्शयत्यग्रिमसूत्रेण ॥



## तत्साधनम् योगसाङ्ख्यम् १।४।३॥

तस्य पूर्व्वनिर्दिष्टस्य विज्ञानस्य साधनम्। साधयति सम्पादयतीति साधनम् निर्वर्त्तनमितिभावः "निर्वर्त्तनोपकरणानुव्रज्यासु च साधनम्" इति कोशात् अर्थनिष्पादनमितियावत् तत्साधनम् ब्रह्मविज्ञानरूपार्थ-निष्पादनम् योगसाङ्ख्यं योगश्च साङ्ख्यञ्च योगसाङ्ख्यम् अत्रसमाहारद्वन्द्वम् वेदितव्यम्। तत्र योगस्य ज्ञानसाधनत्वङ्गम्यते भगवद्वाक्यात् "नहि ज्ञानेन सदृशम्पवित्रमिह विद्यते। तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति" इति। तथा श्रीमान्पतञ्जलिरपि योगाचार्य्यःज्ञानयोगयोः साध्य-साधनभावम् दर्शयति योगानुशासनसूत्रेण "योगाङ्गानुष्ठानादशुद्धि-क्षये ज्ञानदीप्तिराविवेकख्यातेः" इति योगाङ्गानुष्ठानमशुद्धेर्वियोगकारण-म् यथा परशुच्छेद्यस्य यथा यथा अशुद्धिः क्षीयते तथा तथा क्षयक्रमा-नुरोधिनी ज्ञानदीप्तिर्विवर्द्धते ज्ञानदीप्तिनिष्पत्तौ विवेकख्यातिराप्यत इतिभावः। अन्यत्रापि योगशास्त्रे "अथ तत्त्वदर्शनाभ्युपायोयोगः" इति वाक्यात् दर्शनाभ्युपायत्वेन ब्रह्मज्ञानसाधनत्वेनेतिभावः योगः समधिगतः एवं योगस्य ज्ञानसाधनत्वसिद्धौ साङ्ख्यस्यापि तत्साधनत्वम् सिद्धमेवेतिवेद्यम्। अनयोःसमानफलवत्त्वस्मरणात् "एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्" इत्यादि। यतः कर्म्मणश्चापि फलानपेक्षस्य निष्कामस्येतियावत् चित्तशुद्धिद्वारा ज्ञाननिमित्तीभूतत्वात् पुरुषार्थसाधनत्वं स्मर्य्यते "कर्म्मजम्बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः। जन्मबन्धविनिर्मक्ताः पदं गच्छन्त्यनामयम्" इति। ततस्तस्यापि विज्ञानसाधनत्वेनात्रनिर्द्देशः कथन्न स्यात्। तत्रोच्यते कर्म्मणश्चित्तशोधनद्वारा ज्ञानम्प्रति परम्परासाधनत्वम् न साक्षात्साधनत्वम्वेदितव्यम्। योगसाङ्ख्ययोस्तु तत्प्रति साक्षात्साधनत्वम् प्रसिद्धम्। तथात्र व्याख्यातमपि स्पष्टम् स्मर्य्यते पि कर्म्मणोयोगादवरत्वम् "कर्म्मिभ्यश्चाधिकोयोगी तस्माद्योगी भवाऽर्ज्जुन" इति भगवद्वाक्यात्। एवमुपासानापि योगवैरूप्येण स्वीकृता चेत् कर्म्मसादृश्येन चित्तशुद्धिद्वारा विज्ञानम्प्रतिपरम्परासाधनमितिवेदितव्यम्। योगसारूप्यस्वीकारात्त योग व्यपदेशेनैव योगपदवाच्या उपासनापि व्यपदिष्टैवेति अलमत्रसूत्रे विज्ञानसाधनत्वेन उपासनाशब्दव्यपदेशः तस्मान्नात्र उपासनाशब्दो-व्यपदिष्टः श्रीमता सूत्रकारेण। व्यज्यते च उपासनायोगयोः सारूप्यम् "उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो-

दहरम्। तत उद्गादनन्त तव धामशिरःपरमम् पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे"इति स्मरणात्। अत्र स्मृतौ मूलाधारादारभ्य हृदयमवलम्ब्य आशिरसः उपासनावचनात्"हृदयेऽनाहतन्नाम चतुर्थम्पङ्कजम्भवेत्" इत्यादिशतशः योगग्रन्थे योगिना तत्र तत्र चक्रे ध्यानस्मरणात् उपासनायोगयोरेकत्वम्व्यक्तीभवति "उदरम्ब्रह्मेतिशार्कराक्षा उपासते हृदयम्ब्रह्मेत्यारुणयो ब्रह्मा हैवैता इत ऊर्ध्वं त्वेवोदसर्प्पत्तच्छिरोश्रयत" इत्याद्याःश्रुतयोपि प्रकृतम्पोषयन्तीतिवेदितव्यम् । एवं लोकेऽपि द्विजानाम् सन्ध्योपासकानां मूलाधारे हृदये शिरसि च विधिविष्णुरुद्राणाम् प्राणायामत्रयेण गायत्रीमन्त्रगर्भिणी उपासना विधीयते प्राणायामश्च योगाङ्गम्प्रसिद्धम् अतोपि सिद्धम् उपासनाया योगपदवाच्यत्वमिति "एवं तत्त्वाभ्यासान्नास्मि नमे नाहमित्यपरिशेषादविपर्य्ययाद्विशुद्धङ्केवलमुत्पद्यते ज्ञानम्" इत्यादिस्मृतिरपि साङ्ख्यं ज्ञानसाधनत्वेन निर्द्दिशति "तत्कारणं साङ्ख्ययोगाभिपन्नम्" "ज्ञात्वा देवं मुच्यते सर्व्वपाशैः" इत्यादिश्रुतिरपि साङ्ख्योगयोः ज्ञानसाधनत्वन्दर्शयति । ननु द्वैतिनोहि ते साङ्ख्या योगाश्च नानात्वदर्शिनः कथमद्वैतज्ञानसाधका इति । तत्रोच्यते यत्तूक्तम् "तत्कारणं साङ्ख्ययोगाभिपन्नमिति""साङ्ख्ययोगौ पृथक् वालाः प्रवदन्ति न पण्डिताः" इति च। तत्र ज्ञानं ध्यानञ्च साङ्ख्ययोगशब्दाभ्यामुच्यते। अत्र वैदिकमेव ज्ञानं ध्यानञ्च स्वीक्रियते इष्टमेव तयोः स्वीकरणम् सावकाशत्वमितिभावः येन येन अंशेन साङ्ख्ययोगयोर्वेदेनाविरोधः तेन तेन निर्गुणात्मसम्पादकत्वमितिपर्य्यवसितोर्थः ॥ १ । ४ । ३ ।

इति परमपूज्यपादश्रीमद्योगदत्तशर्म्मकृतामृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्म्मशिष्यश्रीमत्सत्यनारायणशर्म्मकृतभाष्ये प्रथमाध्यायस्य चतुर्थः पादः समाप्तः । प्रथमाध्यायश्च समाप्तः ॥ १ ॥

श्रीमान् सूत्रकारः नानापुराणनिगमागमार्णवमवगाह्य योगरत्नमन्विष्याभिगम्य च करुणापूरितहृदयः अपारपारावारनिमग्नान् समाश्रितान् मुमुक्षून् शिष्यानुद्धर्त्तुकामः साधारणजनीन् हठयोगादिप्रसिद्धपद्धतिमपहाय विरलविमलजनावगतसुदुर्ल्लभसुकरराजयोगसरणिमनुसृत्य साधनसोपानसम्बलितम् सिद्धिस्थितिसङ्कलितञ्च तमुपदिशति । तत्र राजयोग इतिनामैव योगानां राजा राजयोग इति व्युत्पत्त्या राजयोगस्य हठयोगादिभ्य औत्कृष्ट्यं गमयति "राजयोगस्य माहात्म्यं कोवाजा-

नाति तत्त्वतः।ज्ञानं मुक्तिः स्थितिः सिद्धिर्गुरुवाक्येन लभ्यते" इत्यादि योगशास्त्रवाक्यम् प्रकृतम्पोषयतीतिवेदितव्यम्। योगस्य सर्व्वसाधनापेक्षया श्रेष्ठत्वमुच्यते योगवीजे "नानामार्गैः सुदुष्प्रापम् कैवल्यम्परमम्पदम्। सिद्धिमार्गेण लभते नान्यथा शिवभाषितम्"इति। अत्रसिद्धि मर्गो योगोवेदितव्यः। श्रुतिस्मृतीतिहासपुराणादिषु तथाप्रसिद्धेः तथाहि "अथ तद्दर्शनाभ्युपायोयोगः""अध्यात्मयोगाधिगमेन देवं मत्वा धीरोहर्षशोकौ जहाति""श्रद्धाभक्तिध्यानयोगादवेद""यदापञ्चावतिष्ठन्तं ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टेत तामाहुः परमाङ्गतिम्। तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्" "अप्रमत्तस्तदा भवति" इत्याद्याः स्मृतयः"ब्रह्मणे त्वामहस ओमित्यात्मानम् युञ्जीत""त्रिरुन्नतं स्थाप्य समं शरीरम्। हृदिन्द्रियाणि मनसा सन्निवेश्य ब्रह्माह्वयेन प्रतरेत विद्वान्। श्रोतांसि सर्व्वाणि भयावहानि" "ओमित्येवं ध्यायथ आत्मानम्" इत्याद्याः श्रुतयः। अपि च यतिधर्म्मप्रकरणे मनुः"भूतभाव्यानवेक्षेत योगेन परमात्मनः। देहद्वयम्विहायाशु मुक्तोभवति बन्धनात्" याज्ञवल्क्यस्मृतिः "इज्याचारदमोऽहिंसादानस्वाध्यकर्म्मणाम् अयं हि परमोधर्म्मोयद्योगेनात्मदर्शनम्" महर्षिमतङ्गः"अग्निष्टोमादिकान् सर्व्वान् विहाय द्विजसत्तमः। योगाभ्यासरतः शान्तः परम्ब्रह्माधिगच्छति" आदित्यपुराणे "योगात्सञ्जायतते ज्ञानम् योगो मय्येकचित्तता" स्कन्दपुराणे "आत्मज्ञानेन मुक्तिः स्यात् तच्च योगादृते नहि। स च योगश्चिरं कालमभ्यासादेव सिध्यति" कूर्म्मपुराणे "योगाग्निर्दहति क्षिप्रमशेषम्पापञ्जरम्। प्रसन्नञ्जायते ज्ञानं ज्ञानान्निर्व्वाणमृच्छति" योगवाशिष्ठे "दुःसहा राम संसारविषवेगविषूचिका। योगगारूड़मन्त्रेण पावनेनोपशाम्यति" भगवद्गीतायाञ्च "जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते" इति। एतावता उक्तम्भवति योगः प्रमाणसिद्धः सर्व्वसाधनोत्कृष्टोज्ञानजनकतया मुक्तिजनकश्च इतितावद्योगम्परिचाययति द्वितीयाध्यायस्थप्रथमसूत्रेण॥

## स्वरूपपरिचयोयोगः २।१।१

"स्वरूपपरिचयः" स्वरूपस्य ब्रह्मणः परिचयः क्रमेण बोधः योगः मनः आत्मना सह युज्यते अनेनेति स योगः समाधिपदवाच्यः यथा स्मर्य्यते "सलिले सैन्धवं यद्वत्साम्यम्भजति योगतः। तथात्ममनसोरैक्यं समाधिरभिधीयते" इति। यद्वा जीवात्मा परमात्मना सह